महाराजाधिराजकामेश्वरसिंह-ग्रन्थमाला - १४

म० म० वामदेवोपाध्यायकृता

# गूढार्थदीपिका




प्रकाशकः

कामेश्वरसिंह दरभङ्गा संस्कृत विश्वविद्यालयः, दरभङ्गा

महाराजाधिराजकामेश्वरसिंह-ग्रन्थमाला - १४

म॰ म॰ वामदेवोपाध्यायकृता

# गूढार्थदीपिका



सम्पादकमण्डलम्

डॉ॰ जयमन्त मिश्रः, डॉ॰ रामसेवक झा
डॉ॰ रामचन्द्र झा, डॉ॰ प्रभुनारायण शर्मा
डॉ॰ शशिनाथ झा, पं॰ श्रीधर्मनाथ झा

प्रकाशकः

कामेश्वरसिंह दरभङ्गा संस्कृत विश्वविद्यालयः, दरभङ्गा

# आमुखम्

अथेयं प्रकाश्यते महाराजाधिराज - कामेश्वरसिंहग्रन्थमालायाश्चतुर्दशपुष्परूपेण म० म० वामदेवोपाध्यायनिर्मिता स्मृतिरहस्यापरनामधेया गूढार्थदीपिका। अत्र स्मृतिविषयकाणां गूढरहस्यानां विवणपुरस्सरं व्यवहारोपयोगिधर्मशास्त्रीयतत्त्वानां परिचयः सप्रमाणं प्रस्तुतः। सूक्ष्मदृष्ट्या विवेचकेऽस्मिन् ग्रन्थे वैदुष्यपूर्णपद्धत्या विचाराः समुपस्थापिताः। पूर्वाचार्याणां, विशेषतो म० म० वाचस्पतिमिश्राणां मतानां समीक्षा कृताऽवलोक्यते।

अस्य ग्रन्थस्य कतिपया मातृकाः अस्मद्विश्वविद्यालये मिथिलाक्षरनिबद्धाः सन्ति। तदाधारेणास्माभिः यथाशक्यमेतत्सम्पादनं विहितम्। अस्मत्सहयोगिनो विद्वांसो धन्यवादार्हा येषां सौजन्यवशादेतत्कार्यमचिरेणैव सम्पन्नम्।

ग्रन्थकारो महामीमांसक इति ग्रन्थप्रौढतयैवावगन्तुं शक्यते। एतद्ग्रन्थस्य महत्त्वमाकलय्यास्माकमत्र विशेषायासः। महतीमुपयोगिताञ्चास्य समवलोक्य प्रकाश्यतामानीय विदुषां पुरतः समुपस्थाप्यते। विद्वन्मूर्द्धन्य - म० म० वामदेवोपाध्यायकृतमिदं ग्रन्थरत्नं जायतां जिज्ञासूनां जिज्ञासासमाधानाय, विदुषां विनोदाय, जगन्मङ्गलाय चेति शम्।

विदुषां वशंवदः<br>
डॉ० जयमन्तमिश्रः<br>
कुलपतिः<br>
१८-२-८५

# भूमिका

धर्मस्य तत्त्वं निहितं गुहायामिति धर्मतत्त्वप्रकाशनाय बहूनां विद्वद्धौरेयाणां निबन्धाः प्रसिद्धाः सन्ति । तत्र म० म० लक्ष्मीधरोपाध्यायस्य कल्पतरुः म० म० चण्डेश्वरठक्कुरस्य रत्नाकरः, म० म० वाचस्पतिमिश्रस्य चिन्तामणिश्चेति विशाला निबन्धाः सर्वविधधर्मशास्त्रीयनिर्णयाय विद्यन्ते । तत्परवर्त्तिभिरपि मनीषिभिस्तत्स्पष्टीकरणाय प्रयासो विहितः । स्मृतिवचनानां स्थूलदृष्ट्या उपपत्तिः सुलभा, किन्तु सूक्ष्मदृष्ट्या तद्गूढता रहस्यमयता वा तिष्ठत्येव । तद्गूढतायाः स्पष्टीकरणार्थं परममीमांसकै र्महानैयायिकै र्महामहोपाध्यायै र्वामदेवोपाध्यायैः स्मृतिरहस्यापरनाम्नी गूढार्थदीपिका विरचिता, यत्र संवत्सर ऋतु-मास-पक्ष तिथि वार-नक्षत्र-दिन-रजनीकृत्यानि, आह्निकानि, शुद्धिविवेचनानि, श्राद्धकृत्यानीति खण्डचतुष्टये तद्विषयिणी गूढता व्याख्याता। अत्र पूर्वाचार्याणां मान्यनिर्णयानामादरपुरस्सरमुल्लेखः कृतः । किन्तु कतिपयेषु स्थलेषु वाचस्पतिमिश्रादीनां समालोचनापि कृता ।

प्रणेता चास्य म० म० वामदेवोपाध्यायो मिथिलामहीमण्डलान्तर्ग-सरिसवग्राममधिवसति स्म । अयं हि मिथिलापञ्जीप्रबन्धानुसारेण 'सरिसवयखाङुर' वंशीयश्रोत्रियकुलमलञ्चकार । एतन्मातृमातामहो म० म० दामोदरठक्कुरो खण्डवलावंशीय-प्रथममिथिलेशस्य म० म० महेशठक्कुरस्याग्रज आसीत् । वामदेवस्य मातामहो माण्डरवंशीयो वैदिक-विश्वम्भर आसीत् । तथा चैतद्वंशः

सदुपाध्यायो रुचिनाथः

| म० म० वामदेवः | विष्णुदेवः | वासुदेवः |
|---|---|---|
| महिनाथः | | |

म० म० वामदेवोपाध्यायस्य श्वशुरः करमहय-अनलपुरवंशीयो रघुनन्दन-

प्रसिद्धो नन्दः शुद्धिनिर्णयकरस्योमापतेः पितामह आसीत् । सर्वमेतत् पञ्जीविषयकं स्पष्टीकरणं पञ्जीकार श्रीहरिनन्दन झा महोदयतोऽवगतम् ।

एतत्परिचयपरिप्रेक्ष्ये म० म० वामदेवस्य समयः १६२५ ई० तः १७०० ई० इति स्वीकर्त्तुं शक्यते ।

एतत्प्रणीता ग्रन्थास्त्वेते ज्ञाताः सन्ति---

१. गूढार्थदीपिका — (स्मृतिदीपिका / स्मृतिरहस्यम्) — सं० विश्वविद्यालये हस्तलेखेषु स्थिता । प्रस्तुतो ग्रन्थः ।

२. श्राद्धपद्धतिः — प्रस्तुत ग्रन्थे २३५ तमपृष्ठे चर्चिता ।

३. आलोकविभूषणम् – प्रस्तुतग्रन्थे १८३ तमपृष्ठे चर्चितम् ।
म० म० पक्षधरमिश्रकृतस्य आलोकस्य व्याख्यानम् ।

४. वैशेषिकरहस्यम् -- हस्तलिखितो ग्रन्थः ।

प्रस्तुतग्रन्थे गूढार्थदीपिकायां बहव आचार्याः चर्चिताः । तेषां नामतः संग्रहणेन एतत्प्रणेतु विषये विशेषबोधः स्यात् । प्रस्तुतसंस्करणं हस्तलेखद्वयस्य साहाय्येन संस्कृतम् । तथापि बहुत्र सन्देहास्पदानि स्थलानि विद्यन्ते । तत्संस्कारो नैव जातः । प्रकाशनत्वरया बहवस्त्रुटयः सन्ति । निर्मत्सरधीधनाः सुधीजनाः स्वयं तत्र तत्र ऊहं करिष्यन्ति ।

आशासे धर्मतत्त्वान्वेषिणो विद्वत्तल्लजा ग्रन्थेनानेन प्रसन्ना भवेयुः ।

मीनसंक्रान्तिः शाके १६०७ डॉ० शशिनाथ झा
व्याकरणभाषाविज्ञानविभागः १४-३-१६८५
का० सिं० द० संस्कृत विश्वविद्यालयः,
दरभङ्गा

# गूढार्थदीपिकाः विषयसूची

★★

ओं नमो गणेशाय

महामहोपाध्याय-वामदेवकृता

# गूढार्थदीपिका

श्रीगोविन्दपदद्वन्द्वमाधाय हृदयाम्बुजे ।
वामदेवेन सुधिया कृता गूढार्थदीपिका ॥१॥

हरिप्रसादादन्येषामवेद्यार्था निरूपिताः ।
इह मात्सर्यमुत्सार्य्य विदां कुर्वन्तु पण्डिताः ॥२॥

तत्र वर्षकृत्ये त्रिंशत्तिथिघटितैर्द्वादशभिर्मासैः, मलमासपाते त्रयोदशभिर्वर्षसमाप्तिर्मार्कण्डेयादिपूजने सपिण्डनवार्षिकयोश्च तथाऽऽचारात् । एवञ्च चूडाकरणोपनयनद्विरागमनवर्षसमाप्यव्रतादौ स एव वर्षो गणनीयः । चतुर्द्दशवर्षव्यापिशिवरात्रिव्रते प्रतिवर्षकर्त्तव्यव्रते चाप्येवम् । "शेषे कर्मणि चान्द्रः स्यादि"ति चात्रानुकूलं वचनन्तथा चोक्तम्--

एका तिथिः कापि तदादिभूता तिथिस्तृतीयेति तिथिप्रबन्धः ।
मासस्स चान्द्रस्तिथिनाम्नि यस्माच्चान्द्रीकलामाप्य सदा प्रवृत्तिः ॥

काप्येका मासघटिता तिथिस्तेन सजातीया तिथिर्मासपूर्वम् सति पूर्वतृतीयतिथेरनन्तरन्तिथिसमुदायश्चान्द्रो मासः । यस्तिथिनामार्थश्चन्द्रे कलापूर्ण उपचीयमानैकचन्द्रकलावत्त्वं शुक्लप्रतिपत्तिथेरुपचीयमानचन्द्रकलाद्वयवत्त्वं शुक्लद्वितीयाया अपचीयमानचतुर्द्दशकलावत्वम्, कृष्णप्रतिपदोऽपचीयमानत्रयोदशकलावत्त्वम् कृष्णद्वितीयाया इत्येवमादितिथीनां निर्वचनमिति ।

वर्षसमाप्त्यनन्तरकर्त्तव्यतया वर्षारम्भकतिथिकर्त्तव्यतया वा विरुपदवाच्यायां देवीस्थापनक्रियायां चैत्रशुक्लप्रतिपदादिः शुक्लादिभिश्चान्द्रै र्द्वादशभिर्मलमासपाते तु त्रयोदशभिर्मासैर्वर्ष इति ।

ऋतुस्तु मासिके त्रिंशत्तिथिघटितमासद्वयात्मक उल्लेखानुरोधाद् यद्यपि मासिके तिथेरुल्लेखो नास्ति तथाऽपि द्वादशमासिकदिनकर्त्तव्यवार्षिके तिथेरुल्लेखोऽस्ति तदनुरोधो बोद्धव्यः । यतिमुण्डनेऽप्येष एव । कृष्णादिस्तु न युज्यते प्रतिपदि मुण्डनापत्तेः । अष्टकाश्राद्धोत्तरेऽष्टको हेमन्त इत्यत्र तादृशमासचतुष्टयात्मकः कृष्णादिचान्द्रचतुष्ट्यात्मको वा तेन कार्त्तिकयनन्तराष्टम्यां श्राद्धम्, नतु फाल्गुनन्यन्तराष्टम्याम् । तच्च शाखान्तरपरमथवा सकलपरमित्यन्यदेतत् । शरदि वसन्ते च नवान्नविधौ शुक्लादि कृष्णादि वा मासद्वयमृतुरिति केचित् ।

वस्तुतस्तु सौरमासद्वयमृतुस्तेन भाद्रशुक्लपक्षेप्याश्विनसौरपतिते व्रीहिपाकश्राद्धं कुर्वन्ति । न कुर्वन्ति च वृश्चिकसूर्ये कार्त्तिकशुक्लपक्षे । यवपाकश्राद्धन्तु वृषार्हसूर्ये वैशाखशुक्ले नाचरन्ति । तच्च मलमासे वैशाखे लिखन्ति निबन्धारः ।

मासस्तु धर्मकार्ये पञ्चविधः-

सौरश्रावणचान्द्रभेदेन त्रिविधश्च । सावनोऽपि त्रिंशद्भिर्दिवसैस्तिथिभिर्वा । चान्द्रोऽपि कृष्णादिः शुक्लादिर्वा । द्वितीयश्च सावनश्चान्द्रोऽपीत्युक्तम्—

विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ।
शेषे कर्मणि चान्द्रः स्यादेष मासविधिः स्मृतः ॥

चूडाकरणद्विरागमनादिकमत्राशौचं चादिपदयोरर्थः । सावनस्त्रिंशद्दिवसात्मकः । चान्द्र इति त्रितयसाधारणम् ।

ज्योतिषे— "दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसंक्रान्तिसुचिह्नः सौरोऽपि निगद्यते सद्भिः ॥"

दर्शाद् अमावास्यातोऽनन्तरतिथिमारभ्य यद्वा दर्शेष्टेः प्रतिपदि दर्शः प्रवर्त्तित इति बोधितत्वात्। तेन दर्शयागतिथिमारभ्येत्यथः। दर्शाद्दर्शपर्यन्तः। सङ्क्रान्तिसुचिह्नः- एकराशिसङ्क्रमक्षणमारभ्यापरसङ्क्रमपूर्वक्षणपर्यन्तः। एका तिथिरित्यादिना च प्रागभिहितो द्वितीयश्चान्द्रस्तृतीयश्च कृष्णप्रतिपदादिः पूर्णिमापर्यन्तः। पूर्णो मासोऽस्यामिति पौर्णमासीपदव्युत्पत्तेर्व्याकरणसिद्धान्तात्।

नच **हारावल्यां** मासशब्दश्चन्द्रार्थक उक्त इति पूर्वश्चन्द्रोऽस्यामित्येव तदर्थ इति शत्रुघ्नोपाध्यायलिखनश्रद्धया कृष्णादिमासाश्रद्धा विधेया। "पूर्णमासादणि"ति सूत्रेण पूर्णो मासोऽस्यामिति व्युत्पादकवाक्येन चाजन्तश्रवणात्। हारावल्याञ्च हलन्तमासशब्दस्य चन्द्रे शक्त्यभिधानात्। पठन्ति **ब्रह्मपुराणे** तिथिकृत्येषु कृष्णादिरिति। अपि च "अश्वयुक् कृष्णपक्षे" त्वित्यत्र, अथ "भाद्रपदे मासि कृष्णाष्टम्या"मित्यत्र ब्रह्मपुराणे चैत्रमारभ्य फाल्गुनपर्यन्तं व्रतविधाने कृष्णादिमासश्चान्द्रो ध्रुवः। "मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः" इति वचनाच्छुक्लादिरप्यस्ति मास इत्यन्यदेतत्। मम तु **प्रतिभाति**—नभसि शब्दोत्तरमकारपाठस्तदलिखनञ्च लेखकप्रमादात्, छान्दसो वा विभक्त्यकारयोर्लोपः, नभःपदं वा मत्वर्थीयाच् प्रत्ययगर्भम्, नीलपदाद्यावन्त इव मध्येऽप्यत्राच् प्रत्ययसम्भवात्। "नित्यमसिच् प्रजामेधयो"रिति पाणिनिना विशेष्याभिधानेन नभशब्दाद्विकल्पेनासिच्। तेन नभो नभ इति श्रावणवाचकम्। एवं नभशब्दादसिच् प्रत्यये नभ इति सिद्ध्यति। तदभावे नभ इति नभशब्द एव वाचक इत्यच्प्रत्ययो नामान्त एव पतति। एवञ्चाव्यवहितोत्तरत्वसम्बन्धेन सावनसम्बन्धी भाद्रो नभःपदार्थः, सान्तञ्चेदं पद नभ मेघ सेवत इति व्युत्पत्तेः। एवञ्च योगेन भाद्रमासोऽच् प्रत्यय विनाऽपि नभःपदार्थः "वर्णागमो वर्णविपर्ययश्चे"ति सेवत इति व्युत्पत्त्या मेघाकाशौ सान्तनभःशब्दवाच्याविति मान्तं नानार्थमध्ये नभःपदं गणितम्।

अत्र च वार्षिक - मासिक - षाण्मासिक - सपिण्डनाष्टकाश्राद्धेषु द्वितीयश्चान्द्रः, उल्लेखोऽप्याद्यन्तयोस्तस्य कृष्णादेश्चान्द्रस्य "तिथिकृत्येषु कृष्णादिरि"ति।

पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टन्तथाब्दिके ।
आब्दिके पितृकार्ये च मासश्चन्द्रमसः स्मृतः ॥

इति वचनैस्सिध्यति । मलमासशुक्लपक्षपतितप्रथमाब्दिकेऽप्येवम् । वर्द्धमानादिमते तु कृष्णादिः, श्रावणकृष्णपक्षे मृतानामाषाढमलमासकृष्णपक्षे क्रियमाणात् । आब्दिके शुक्लादिश्चान्द्र एवादरणीय उल्लेख्यश्चेतिविशेषः शिष्टाचार-विरोधात् ।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्निषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥
तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः ॥

इति वचनात् शुक्लादिरेव मास इत्याचारो बोध्य इति चेन्मैवम् —

शुक्लादिर्मास इत्येव हि वचनार्थो, नतु शुक्लादिरेवेत्यवधारणम् । एवकाराद्यस्मरणात् किञ्चिद् द्वितीयश्लोकप्रतिपाद्यौ मलमासतदनन्तर-मासौ शुक्लादी इति श्लोकयोरेकवाक्यतया प्रतिपाद्यं, न तु प्रथमश्लोको मास-सामान्यलक्षणपरो, वाक्यभेदापत्तेः । आद्याधिमासे मासिकवृद्धिरन्त्याधिमासे तदभाव इति प्राचां लिखनं शुक्लपक्षमृतपरमिति मलमासकृष्णपक्षमृत-वार्षिकश्राद्धसङ्कल्पोल्लेखसङ्गत्यर्थं शुक्लादिमासादरः परास्तः ।

यवमध्यचान्द्रायणे मासोपवासे यावत्कालकृत्यन्देवीपूजारम्भे चैत्रादिमासे चैकभुक्तव्रते शुक्लादिरादरणीयः । कार्त्तिकैकभुक्तव्रते तु सौरमासादर इति शिष्टाचारः । एकस्थले उल्लेखोऽपि शुक्लादिचान्द्रस्य तद्व्यापकसावनस्यापि तन्त्रत्वात् । नन्वस्य सावनस्य चैत्रत्वादिना कथमुल्लेखः, चित्रायोगयोग्य-पौर्णमासीकत्वस्यातिप्रसक्तत्वात् । चैत्राष्टमीकर्त्तव्यव्रताब्दिकयोः फाल्गुनो-ल्लेखाविरोधप्रसङ्गाच्चेति चेन्मैवम्, शुक्लादिचैत्रावच्छिन्नसावनचान्द्रत्वं सावनचैत्रत्वमेकभुक्तादिव्रते कृष्णादिपौषघटकतिथ्यारब्धसावनचान्द्रत्वं सावनपौषत्वमष्टकाब्दिकश्राद्धयोरुल्लेखार्थं सम्भवति ।

वस्तुतस्तु सावनपुरष्कारेण विहितेऽपि कर्मणि कृष्णादिशुक्लादी

एवोल्लेख्येन तद्घटितचान्द्रसावननानाशक्त्या नानाचन्द्रप्रतिपादने सकृदुच्चरितन्यायविरोधात्तात्पर्यगौरवाच्च । शक्यतावच्छेदकं हि मीनादित्यारब्धप्रथमप्रतिपत्कत्वं मीनादित्यारब्धद्वितीयप्रतिपत्कत्वं शुक्लादिकृष्णाद्योश्चान्द्रसावनस्य तूक्तं द्वयमिति तत्त्वम् ।

इदन्त्ववधेयम्-व्याकरणेन कृष्णादिचतुष्टयं चान्द्रे, "पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ" इति कोषेण शुक्लादौ चान्द्रे शक्तिः सावनयोर्द्वयोः, सौरे च परिभाषैव स्मृतौ ज्योतिःसिद्धा । लघ्वपि मीनादित्यावच्छिन्नत्वं न शक्यतावच्छेदकम्, व्याकरणादेः शक्तिग्राहकस्य विरहात् ।

एवञ्च शब्दानां मुख्ये सम्प्रत्यय इत्यादावेव मासावुत्सर्गतः प्रतीयेते विधिवाक्ये उल्लिख्येते च । सङ्कल्पवाक्ये तत्रापि "दर्शाद्दर्शश्चान्द्र" इति परिभाषासाहित्येन-"यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यत" इति वचनस्वारस्येनाद्यमुत्सर्गतः प्रतीयते । किञ्च प्रथमे शक्यतावच्छेदकलाघवादौत्सर्गिकत्वम् । तथा हि-मीनादित्यारब्धत्वं लघु मीनादित्यारब्धशुक्लप्रतिपदादिपञ्चदशतिथितत्पूर्वपञ्चदशतिथ्यन्यतमत्वं मीनादित्यावच्छिन्नामावस्याघटितपक्षतदुत्तरपक्षान्यतमत्वं वा गुरु कृष्णादिलक्षणमिति सूक्ष्मेक्षिका चूडोपनयनविवाहादिद्विरागमनविहिता नवान्ने विहिता निषिद्धाश्च सौरा एव मासाः ।

"कुम्भाजालिरविश्च" इति वृश्चिके पूर्वभागे तु नवान्नमिति, "तुलायान्नैव कारयेद" इति "पौषे चैत्रे कृष्णपक्षे नवान्नन्नाचरेद् बुधः" इति "धनुषि यत्कृतं श्राद्धमिति" वचनेभ्यः । उपनयने तु-नो जन्मेन्दुभमाससूर्यरविजक्ष्माजाहसुप्ते हराविति निषेधात्सौरचान्द्रकृष्णाद्योर्न्निषेधः समाचारात् । शुक्लादेर्मासपदेनोपस्थितावप्याचारेण बाधः, पौषे चैत्र इत्यत्र समभिव्याहारात् सौर एव चैत्रो निषिद्धः । चैत्रे कृष्णपक्ष इति विशिष्टान्वयो न बोध्यः । फाल्गुन्यनन्तरश्चैत्र्यनन्तरो वा कृष्णपक्षो निषिद्ध इत्यनध्यवसायापत्तेः । "न कृष्णपक्षे धनुषीति" निषेधाच्चेत्याकलमासः । एवम् वचनसन्दर्भादपरादिकमासादरोऽन्यत्राप्यवसेयः ।

पक्षश्च द्विविधः-वर्द्धमानैककलावच्छिन्नतिथ्युपक्रमकपञ्चदशतिथ्यात्मकः,

ह्लासमानचतुर्द्दशकलावच्छिन्नतिथ्युपक्रमकपञ्चदशतिथ्यात्मकश्च पक्षोपवासे द्वयोरपि पक्षयोराद्यतिथ्यारम्भः। मासोल्लेखस्तु तत्र नास्त्येवेति न तत्र शक्लादिकृष्णादिचिन्तेत्यलं विस्तरेण।

## अथ मलमासः

तत्र—"तमतिक्रम्य तु यदा रविगच्छेत्कदाचन।
आद्यो मलिम्लुचो ज्ञेयो" इति लक्षणमुक्तम्॥

"रविणा लङ्घितो मासो मलमासः प्रकीर्त्तितः। एवञ्च—प्रतिपदि सङ्क्रान्तौ न मलमासो भवति। न वा चरमतिथावमावास्यायां सङ्क्रमे रविसंक्रमलङ्घनाभावात्।

'नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेः।
तथा-"अमावास्याद्वयं यत्र रविसङ्क्रान्तिवर्जितम्॥
मलिम्लुचः स विज्ञेयो गर्हितः सर्वकर्मसु।"

द्वयमिति-प्रथमामावास्या दर्शयागतिथिर्द्वितीया च पञ्चदशी तिथिर्बोध्या। यद्वा अमावास्यापदं पञ्चदश्यन्तु पक्षद्वयार्थकम्। अथवा तत्पदं तच्चरमक्षणपरम्।

बृहस्पतिः--"नित्यनैमित्तिके कुर्यात् प्रयतस्सन्मलिम्लुचे।
तीर्थस्नानङ्गजच्छायां प्रेतश्राद्धन्तथैव च॥"

नित्यमाह्निकमग्निहोत्रशौचाचमननिषिद्धवर्ज्जनादिकममावास्याश्राद्धञ्च "मासी मासि"ति श्रवणात्। अष्टकाऽन्वष्टकाश्रावण्याग्रहायणीमाघीत्रयोदशीं वा श्राद्धादिकम्। जन्माष्टमीमीशिवरात्रिबहुलाजीमूतवाहनपूजादिकन्तु सावकाशत्वान्निषिद्धमेव।

"पक्षादावेव कुर्वीत सदा पक्षादिकञ्चरु" इत्यादौ सदा स्मरणान्नित्ययोर्दर्शपौर्णमासयोरनिषेधः। नैमित्तिकान्यस्पृश्यस्पर्शनत्रिविधोत्पातपुत्रजन्मज्ञातिमरणास्थिसञ्चयदुःस्वप्नदर्शन - वस्त्रपरिधानाद्याचमननिमित्तरजोयोगादिनि-

मित्तकस्नानश्राद्धाचमनादीनि च गर्भाधानपुंसवनसीमन्तोन्नयनसोष्यन्तीकृमिदंष्टचिकित्साभृत्यवेतनदानकुसीदवृद्धिग्रहणादीनि च ।

तीर्थस्नानेष्वावृत्तम्, "मलिम्लुचे त्वनावृत्तं तीर्थस्नानमपि त्यजेद्" इति वचनात् । गजच्छाया राहुदर्शननिमित्तस्नानदानादिः, "राहुर्वै हस्ती भूत्वा चन्द्रमसं ग्रसतीति" श्रुतेः । मलमासाश्विनकृष्णत्रयोदश्यां हस्तादित्यासम्भवेन परिभाषितगजच्छाया भ्रमस्तु हेयः । प्रेतश्राद्धं ब्रह्मपुराणीयम्, कातीयञ्च षोडशात्मकं सप्तदशात्मकञ्च । तथैव चेति चकारेण दाशाहिकपिण्डदानतिलतोयाञ्जलिगङ्गाऽस्थिक्षेपादिसमुच्चयः ।

ज्योतिषे—"जातकर्मणि यच्छ्राद्धं नवश्राद्धन्तथैव च ।
प्रतिसंवत्सरश्राद्धमशौचात्पतितञ्च यत् ॥"

पुत्रजन्मनिमित्तकाभ्युदयिकमस्थिसञ्चयषोडशी-अन्त्याधिमासपतितप्रथमाब्दिकमशौचान्तक्रियमाणसांवत्सरिकञ्च मलमासे कार्यमन्यच्च वार्षिकन्तत्र निषिद्धमिति शेषः ।

"इष्टं वाऽप्यथवा पूर्त्तं तन्न कुर्यान्मलिम्लुचे ।
गर्भे वादर्धुषिकृत्ये च मृतानाम्पिण्डकर्मसु ॥
सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः ।"

विदुरित्यनन्तरं निषिद्धमिति शेषः । पूर्वसङ्कल्पितं शिवपूजाऽन्नदानादिनिरवकाशङ्कार्यम् । सावकाशम्पूर्वसङ्कल्पि वेदपुराणस्तवपाठादिकञ्च त्याज्यमेव । धरणीव्रते द्वादशोपवासा द्वादशमूर्त्तीनाम्पूजा चोक्तेति मलमासे त्रयोदशमासे पुजोपवासौ न स्तः । एवमन्वष्टकाऽष्टकाचतुष्टयनिष्पत्तेः माघफाल्गुनमलमासत्वे तयोर्न्न पञ्चमयोराचरणन्तत्र—"षष्ट्या तु दिवसैर्मासः कथितो वादरायणैः" रिति वचनेन तत्रैव द्वादशचतुष्टयमासत्वप्रतिपादनं त्रयोदशपञ्चमासयोः कृतम् । अनन्तव्रतशिवरात्र्यादिकं मलमासे त्याज्यमिति सिद्धम् ।

ज्योतिषे—"एकस्मिन्नपि वर्षे यत्रैतल्लक्ष्म मासयोरुभयोः ।

तत्रोत्तरोऽधिमासः स्फुटगत्या भवति चार्केन्द्वोः ॥
दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित् ।
नपुंसकत्वम्भवति न तु पौषस्य च क्वचित् ॥
झषकन्यागते सूर्ये वृश्चिके वाऽथ धन्विनि ।
मकरे वाऽथ कुम्भे वा नाधिमासं विदुर्बुधाः ॥

"असंक्रान्तिमासोऽधिमासः स्फुटः स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।
क्षयः कार्त्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयञ्च" ॥

कन्याषट्के मीनादिषट्के च लक्षणाक्रान्ते कन्यादिषट्क एव मलमासनिषेधः । कन्यादिषट्केतरक्षयमासमध्यके तादृशमासद्वये माघफाल्गुनयोरेव मलमासनिषेधः । क्षयमासस्तु कर्मार्हत्वादनिषिद्धः । केचित्तु—

"यस्मिन्मासे न सङ्क्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासावधिमासश्च निन्दिताः ॥"

इति वचनात्तत्रापि निषेधश्चोदितः । तेन द्वावप्यधिमास इति निन्दितावित्यर्थः । तथा— "त्रयोदशं तु श्रुतिराह मासं चतुर्द्दशः क्वापि न दृष्टपूर्वः ।"

मीनादिषट्कमध्ये क्षयमासासम्भवान्मलमासद्वयं न भवति, कन्यादिषट्के च क्षयमासप्राप्त्या त्रयोदशैव मासा भवन्तीति चतुर्द्दशमासात्मको वर्षो नास्तीत्यर्थः । जीवनार्थमीश्वरसेवनं परराष्ट्रग्रहणं कृषिवाणिज्यादिद्विजसुश्रूषाचरणानि मलमासेऽपि कर्त्तव्यानि । "योगक्षेमार्थमीश्वरमधिगच्छेद्" इति श्रुतेः । "तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ।" इत्यादि वचनादिति दिक ।

## अथ तिथिनिर्णयः

तत्र गौडाः—"युग्माग्निकृतुभूतानि षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा ॥

प्रतिपदा त्वमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥"

दशमीकृष्णप्रतिपदोस्तु—"सा तिथिस्सकला ज्ञेया यस्यामुदयते रविः ।" सकला उत्कर्षवती । कृष्णत्रयोदशीमभिप्रेत्याह—"कामविद्धो हरः पूज्यः ।"

"युगाद्या वर्षवृद्धिश्च सप्तमो पार्वतीप्रिया ।
सूर्योदयमपेक्षन्ते न तत्र तिथियुग्मता ॥"

युगाद्येति - मन्वादियुगाद्योरुपलक्षकम् । पार्वतीप्रिया - पत्रिकाप्रवेशाधिकरकरणकाश्विनशुक्लपक्षीया । तथा "तिथेः प्रागुपोष्यं स्यात्" इदञ्चैकादश्युपवासपरम् । कृष्णचतुर्दश्युपवासस्य त्रयोदशीविद्धे विधानात् ।

एकादशी दशाविद्धा परतो न च बर्द्धते ।
गृहीभिर्यतिभिश्चैव सैवोपोष्या महाफला ॥
एकादशीमुपवसेद् द्वादशीमथवा पुनः ।
विमिश्रां वा प्रकुर्वीत न दशम्या युतां क्वचित् ॥

दशमीविद्धैकादशीनिषेधस्तूदयगाम्येकादशीलाभे । षष्टिदण्डात्मकद्वादश्युपवासविधिश्च द्वादशीव्रते । यद्वा—

"षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे ।
अकर्मण्यं तिथिमलं विद्यादेकादशीं विना" ॥

इति वचनादेकादशीतिथिमलरूपाऽपि समुपोष्यैवेति ।

तथा—"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
रात्रिव्रतेषु सर्वेषु रात्रियोगो विशिष्यते ॥

तथा— "प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी ।"

इदमध्ययननिषेधविषयं द्वितीयाध्ययननिषेधे पर्यवस्यति । तेन स्त्रीमांससम्भोगक्षौरादौ तु निषिद्धे कालवर्जनमिति व्यवस्था द्रष्टव्या ।

स्मृतिः— "रम्भाख्यां वर्जयित्वा तु गणयुक्ता प्रशस्यते ।"

एवञ्च "युग्माग्नी"ति रम्भातृतीयापरमेव । सा च भाद्रशुक्लतृतीया-ज्येष्ठशुक्लतृतीया च । षष्टिदण्डात्मकतिथौ चतुर्द्दशीरामनवमीव्रतादिकम्, नतु परदिने तिथिमलत्वात्, खण्डतिथावेव विनिगमकाकाङ्क्षायां वा साग्नि-विधिप्रवृत्तेश्च । एकादश्यान्तु परदिन एवोपवासः । "सर्वन्तिथिमलन्धर्मे त्याज्यमेकादशीं विना" इति वाक्येन तत्रोपवासविधानात् ।

## अथैकादशी-निर्णयः

"सङ्क्रान्तौ रविवारे च ग्रहणे चन्द्रसूर्ययोः ।
पारणञ्चोपवासञ्च न कुर्यात्पुत्रवान् गृही ॥
तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृतो दोषो यतो नित्यमुपोषणम् ॥"

तदयं साक्षात्पारणानिषेधमुखेन च निषेधो धर्मनिमित्तोपवासस्य, ज्वर-बन्धाद्यनुषङ्गे नोपवासदोषो नास्ति यतोऽवश्यम्भावि तदित्यर्थः ।

मात्स्ये— "दिनक्षयेऽवर्कसङ्क्रान्त्यां ग्रहणे चन्द्रसूर्ययोः ।
उपवासन्न कुर्वीत पुत्रपौत्रसमन्वितः ॥
शयनीबोधनी मध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥
यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा ।
विभेदमनयोः कुर्वन्याति लोकादधोगतिम् ॥"

इदन्तु यतिपरम् ।

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
ब्रह्मचारी च नारी च शुक्लामेव सदा गृही ॥"

नार्य्यवीरा । ब्रह्मचारिपदमत्र वनस्थवाचकम् । योगाद् भुक्तभोजन-

निषेधपरं वा । "अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।" इति पापमधिकृत्य बोधनात् ।

'उपवासनिषेधे तु भक्ष्यङ्किञ्चित्प्रकल्पयेत ।" इति वचनात् निषेधपदस्यासामर्थ्यमित्यर्थानभिज्ञव्याख्यानमनर्थकमेव स्यात् । एतत् निषेधः पृथगिह नास्ति वाक्यभेदापत्तेः । दशमीदिने पश्चादेकादशीकाले भोजनाचारविरोधाच्चेति चेत् सत्यम्, परन्त्वहोरात्रावच्छिन्नानशनमुपवासः, स एव विधेयः । तदकरणे निन्दार्थवादे—

"अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे"इत्यादि, उपवासश्च यस्मिन्नहनि विहितस्तत्रैवाकरणे निन्दार्थवादः । एवञ्च महाराष्ट्रादीनां निषिद्धे कालवर्जमिति वचनं दृष्ट्वाऽनत्यागकष्टसहनमस्पृष्टशास्त्रदृष्टार्थानामतिहेयम् ।

शयनैकादश्यनन्तरञ्चतस्रो मलपाते तु पञ्चैकादश्यः कृष्णाः काम्या एव ।

> "एकादश्यान्तु कृष्णायामुपोष्य विधिवन्नरः ।
> पुत्रायुश्च समृद्धिञ्च सायुज्यञ्च स गच्छति ॥"

इति वचनात् । एवञ्च सङ्कल्पादिविधिहीनो नित्योपवासः कृष्णचतुष्टये वर्जनीय एव । पुत्रवतश्च गृहस्थस्य तत्र काम्योपवासो निषिद्ध एव । "एकादश्यान्तु कृष्णायां ज्येष्ठः पुत्रो विनश्यती" त्यनिष्ट - स्मरणात् । अथ पुत्रवतः कृष्णासामान्यनिषेधोऽस्तु नत्वपुत्रस्येति चेन्मैवम्, शयनीबोधनीमध्य इति विशेषोपादानात् । नच पुत्रवद्गृहिपरं विशेषोपादानम्, "वनस्थयतिधर्मोय" मित्यस्य "ब्रह्मचारी च नारी च शुक्लामेव सदा गृही" इति वचनस्यासङ्गतापत्तेः ।

> "असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
> कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥
> भ्रातरं भगिनीं शिष्टं ब्राह्मणं दक्षिणादिभिः ।
> अन्यार्थं समुपोष्याऽपि स्वयञ्च फलभाग्भवेत् ॥"

कात्यायनः—"पितृ - मातृपतिभ्रातृस्वसृगुर्वादि - भूभुजाम् ।
दक्षिणाऽत्र न दातव्या शुश्रूषा विहिता हि सा ॥"

दक्षिणादानम् प्रतिनिधिने सम्बन्धोपवासकर्तृ - ब्राह्मणाय कार्यम् । पत्नीपुरोहितादीनां शुश्रूषोपयोगिसम्बन्धनिबन्धनप्रातिनिध्यमिति न तेभ्यो देयेत्यर्थः। एतदभावस्थलेऽदक्षिणेति भावः । सामर्थ्ये उपवासनिषेधे च पठन्ति—

"नक्तं हविष्यान्नमनोदनञ्च हविस्तिलाः क्षीरमथाम्बुचाज्यम् ।
यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च ॥"

भक्ष्यमिति शेषः । नक्तं रात्रौ भोजनमित्येकः पक्षः । हविः—श्राद्धे सङ्कल्पितमन्नादि ।

स्मृतिः— "एकभुक्तेन नक्तेन बालवृद्धातुरः क्षपेत् ।
पयोमूलफलैर्वाऽपि नैवाद्वादशिको भवेत् ॥"

"तथैवायाचितेन चे"ति द्वितीयचरणे क्वचित्पाठः ।

विष्णुः— एकभुक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन भैक्ष्येण नैवाद्वादशिको भवेत् ॥
उपवासे त्वशक्तानामशीतेरुर्ध्ववासिनाम् ।
एकभुक्तादिकङ्कार्यमाह बोधायनो मुनिः ॥

नारदः— "अष्टाब्दादधिको मर्त्यो अपूर्णोऽशीति वत्सरः ।
भुङ्क्ते यो मानवो मोहादेकादश्यां स पापकृत् ॥"

गौतमः— "आदित्येऽहनि संक्रान्तौ सहितैकादशीषु च ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही ॥

सहिता—दशमीसहितेत्यर्थः ।

विष्णुरहस्ये— "परमं पदमापन्ने हर्षे च समुपागते ।
सूतके मृतके चैव न त्यजेद् द्वादशीव्रतम् ॥"

द्वादशी चात्रैकादश्येव, द्वादशीयुक्ताया एव तस्या महत्त्वाधिक्याद् द्वादशीपदवाच्यत्वमपि। निन्दार्थवादा "दुपोष्यैकादशीं नित्यमि"ति गरुड-पुराणा "देकादशी सदोपोष्ये"ति सनत्कुमारवाक्यात्, "पक्षे पक्षे च कर्त्तव्य-मेकादश्यामुपोषणम्" इति तद्वचने वीप्सास्मरणात्, "द्वादशी न प्रमोक्तव्या यावदायुः स्ववृत्तिभि" रिति विष्णुरहस्यादे "कादश्यान्दिवारात्रौ नक्तञ्चैव हि पर्वणीति" दिने रात्रौ वा भुक्तञ्चेत्तदा नक्तव्रते प्रायश्चित्तमिति बोधनादिदं व्रतं नित्यम्।

"तावत्पापानि निष्ठन्ति देहेऽस्मिन् मनुजाधिप।
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम्॥"

इति वचनात्काम्यमिति। काम्यप्रसङ्गेन च नित्यं सिध्यति। सङ्कल्पाद्याचरणे च नित्यमात्रनिर्वाह एव। अत्र क्षुद्र पूर्वपक्षाः परैर्निबन्धृभिरपास्ता विस्तरभियाऽत्र नोपात्ताः।

## अथ पारणानिर्णयः

स्कान्दे— "द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम्।
यदा भवेदतीवाल्पद्वादशी पारणादिने॥
प्रातरेव तदा कुर्यात् कर्म माध्याह्निकन्त्वपि।"

प्रातररुणोदये।

देवलः— "सङ्कटे विषमे प्राप्ते पारणन्तु कथम्भवेत्।
अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत्॥"

वायुपुराणे—"कलाप्येकादशी यत्र परतो द्वादशी न चेत्।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणे॥"

ब्रह्माण्डे—"काङ्स्यं मासं सुरां क्षौद्रं लोभं वितथमेव च।
व्यायामञ्च प्रवासञ्च दिवास्वप्नमथाञ्जनम्॥

शिलापिष्टं मसूरञ्च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥

पुनर्भोजनमध्वानं भाव आयासमैथुनम् ।
उपवासफलं हन्युर्दिवा निद्रा च पञ्चमम् ॥"

आयासमैथुनयोरेकविभक्त्यन्तत्वादेकत्वमौपचारिकम् ।

वृहस्पतिः—"दिवा निद्रा परान्नञ्च पुनर्भोजनमैथुने ।
क्षौद्रं कांस्यामिषन्तैलं द्वादश्यामष्ट वर्जयेत् ॥"

अत्र फलं हन्युः, "सर्वपापैः प्रमुच्यत" इत्यभिधानात् काम्योपवासपरः कांस्यादिनिषेधः। तत्राप्यद्भिः पारणे पुनर्भोजनाभ्यनुज्ञा। नित्योपवासे तु न निषेधः। एवञ्च भुक्त्वेन - चतुष्टयनिवृत्तिरुपवास इत्यर्थकं गौडवचननं यदि समूलन्तदा काम्योपवासपरमेव। द्वादशीव्रते त्वेकादश्युपवासपूर्वक-वासुदेवपूजनरूपे द्वादश्यां पूजनानुरोधाद्दशमीविद्धायामप्येकादश्यां फलाहारादिकङ्कार्य्यमिति विशेषः।

शिष्टाः—"आभाकासितपक्षे च मैत्रश्रवणरेवती ।
द्वादशीबुधवारेण हरेर्वासर उच्यते ॥
ताञ्चैवोपवसेन्नित्यं प्राणैः कण्ठगतैरपि ।"

अत्र मासनक्षत्रयोर्यथाक्रमेणान्वयः। अशक्तस्य तु फलमूलाहारेण नित्यत्वनिर्वाह इति।

## अथ चैत्रादिमासकृत्यानि कानिचिद् दुरूहाणि निरूप्यन्ते

ब्राह्मे—"एकादश्यान्तु शुक्लायामाषाढे भगवान्हरिः।
भुजङ्गशयने शेते बोधन्यां शयनच्युतिः ॥"

यमः-- "क्षीराब्धौ शेषपर्यङ्कमाषाढ्यां संविशेद्धरिः।
निद्रान्त्यजति कार्त्तिक्याङ्काशस्थम्पूजयेत्सदा ॥

वामने- "एकादश्याञ्जगत्स्वामी शयनम्परिकल्पयेत् ।
लब्ध्वा पीताम्बरधरः स्वस्थो निद्रां समाचरेत् ॥"

धर्मोत्तरे- "आस्तीर्ण शयनन्दत्वा प्रीणयेद्भोगशायिनम् ।
आषाढशुक्लद्वादश्यां विष्णुलोके महीयते ॥"

ब्राह्मे- "एकादश्यान्तु गृह्णीयात् संक्रान्तौ कर्कटस्य वा ।
आषाढ्यां वा नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ॥"

अत्र प्रथमतृतीयपक्षयोर्मलमासपाते पञ्चमासान् त्रिंशत्तिथ्यात्मकान् व्याप्नोति व्रतमित्यभिहितप्रायम् । समाप्तिश्च सजातीयतिथौ वृश्चिकसंक्रमे वेति मन्तव्यम् ।

शिष्टाः— "तपनस्य सुता गङ्गा गोमती च सरिद्वरा ।
रजसा न प्रदुष्यन्ति ये चान्ये नदसञ्ज्ञकाः ॥
आदौ कर्कटके देवी त्र्यहं यावद्रजस्वला ।
चतुर्थेऽहनि सम्प्राप्ते शुद्धा भवति जाह्नवी ॥
सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणम् ॥"

छन्दोगपरिशिष्टे— "यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥"

"गङ्गे च जाह्नवी"ति च साक्षात्समुद्रगान्तरस्याप्युपलक्षकं, सम्प्राप्त इत्यभिधानात् । सूर्योदयमारभ्य चतुर्थदिने शुद्धिः । सिंहेति - सिंहावस्थितिचरमक्षणपर्यन्तङ्कर्कटावस्थितिप्रथमक्षणमुपक्रम्येत्यर्थः । तर्पणमिति -- मध्यपतितसन्ध्योपासनसंग्राहकम् । नद्या उद्धृतन्तु जलमनिषिद्धम् , तास्वित्यधिकरणतावगमात् शिष्टाचाराच्च । यव्यो मासः सौरः ।

तथा- "धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवाच्या गर्त्तास्ते परिकीर्त्तिताः ॥"

धनुर्हस्तचतुष्टयं तत्सहस्राष्टकपर्यन्तं, न गतिरित्यभिधानात् निश्चलमतिदीर्घजलाधिकरणमनिषिद्धम् ।

"उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥"

याज्ञवल्क्यः–"स्नानं ध्यानमुपाकर्म श्रावण्यां श्रवणेऽपि वा ।
पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥
जलान्ते छन्दसाङ्कुर्युरुत्सर्गं विधिवद्बहिः ।
उपाकर्म उपाकर्मस्नानतर्पणपूर्वकम् ॥"

उपाकर्म - उपकर्मकाण्डिकाकीर्त्तनम् ।

स्मृतिः-- "उपाकर्म च कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः ।
ग्रहसंक्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु ॥"

ग्रहो- ग्रहणम्, वचनान्तरसंवादात् ।

हस्तो - भाद्रशुक्लपक्षीयः । प्रौष्ठपदशुक्लपक्षे हस्तेनाचार्य्य इत्युपाकर्म परिशिष्टात् । संक्रान्तिभूषिते हस्ते नैव । बशिष्ठः-अथातः स्वाध्यायकर्म श्रावण्यां पौर्णमास्यां प्रौष्ठपद्यां वा । श्रवणनक्षत्रे श्रावणे ऋग्वेदिनामुपाकर्म । तदसम्भवे तु बह्वृचपरिशिष्टम् ।

"अवृष्टयौषधयस्तस्मिन् मासे न भवन्ति चेत् ।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते ॥"

यजुर्वेदिनम्प्रत्याह--

गार्ग्यः—"यदि स्याच्छ्रावणं पर्व राहुसङ्क्रान्तिदूषितम् ।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥"

वसिष्ठोक्ता भाद्री तु न तस्य कालः । वसिष्ठस्य सामवैदिककर्मबोधकत्वात् ।

मनुः—"श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
युक्तश्छन्दाँस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान् ॥
पुष्ये तु छन्दसां कुर्याद् बहिरुत्सर्जनन्द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥
छन्दोगा मिलिताः कुर्युरुत्सर्गं छन्दसां बहिः ।
विरमेत्पक्षिणीं रात्रिं यद्वाप्येकमहर्न्निशम् ॥
यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रिं तदेवैकमहर्निशम् ॥
अत ऊर्ध्वन्तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि तु सर्वाणि कृष्णपक्षेषु सम्पठेत् ॥"

अर्द्धं पञ्चमं येषां तान् सार्द्धचतुरो मासानिति यावत् । तेन श्रावण्यामुपाकर्म चेत्तदा पौषे कार्य उत्सर्गः । भाद्र्याञ्चेदुपाकर्म तदा माघशुक्लपक्ष उत्सर्गः । एवञ्च सार्द्धमासचतुष्टयमन्तरालो द्वयोर्बोद्धव्यमिति । पुष्ये पौषमासे रोहिणीनक्षत्रे याज्ञवल्क्यसंवादात् ।

तथा च—"पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद् बहिः" ॥

अशून्यशयनव्रते नारीपुरुषाधिकारिके—

"लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा भवान् ।
तथा कलत्रसम्बन्धो देव मा मे वियुच्यताम्" ॥

इति मन्त्रे स्त्रिया पठ्यमाने "तथा मे पतिसम्बन्ध" इति केचिदाहुस्तन्न, कलत्रसम्बन्धपदेन पतिसम्बन्धाभिधानसम्भवात्, सम्बन्धस्योभयनिरूप्यस्यैकत्वात् ।

## अथ भाद्रकृष्णाष्टमीव्रतम्

भविष्ये - "सिंहराशिगते सूर्ये गगने जलदाकुले ।
मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ॥

शशाङ्केऽष्टमराशिस्थे नक्षत्रे रोहिणीयुते ।
वसुदेवेन देवक्यामहञ्जातो जनार्दनः ॥"

तथा -- "पुण्ये तद्दिवसे प्राप्ते दन्तधावनपूर्वकम् ।
उपवासस्य नियमङ्गृह्णीयाद्भक्ति - भावनः ।
एकेनैवोपवासेन कृतेन कुरुनन्दन ।
सप्तजन्म कृतात्पापान्मुच्यते नात्र संशयः ॥"

तथा--"स्थण्डिले स्थापयेद्देवीं सचन्द्रां रोहिणीन्तथा ।
देवकीं वसुदेवञ्च यशोदां नन्दमेव च ॥
बलदेवन्तथा पूज्यं सर्वपापैः प्रमुच्यते ।"

तथा---"जयन्त्यामुपवासश्च महापातकनाशनः ।
सर्वैः कार्यो महाभक्त्या पूजनीयश्च केशवः ॥"

तथा —"अकुर्वन् याति निरयञ्यावदिन्द्राश्चतुर्दश ।
प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी ॥
वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थञ्चक्रपाणिनः ॥"

सिंहेति-एवञ्च सिंहादित्यरोहिण्येनैतद्व्रतारम्भः प्रशस्तत्वात् । अष्टमेति वृषराशेर्द्वादशांशकल्पनयाऽष्टमांशस्थ इत्यर्थः । "रोहिणीयुते नक्षत्रे नक्षत्राणामहं शशीति" स्मरणाच्चन्द्रो नक्षत्रपदार्थः । दन्तेति - उषः कालस्योपवासदिनत्वाभावात् तत्र दन्तधावनङ्काष्ठैरेव । अत्रोपवासः प्रधानम् "उपवासस्य नियमं गृह्णीयादि" ति विधेः, "महापातकनाशनः" इत्यर्थवादाच्च । पूजा त्वङ्गम् - "पूज्यं पापैः प्रमुच्यते" इति क्त्वाप्रत्ययो न हेतुत्वबोधकः ।

जयन्त्यामष्टमीरात्रौ तदुक्तम् --

ब्रह्माण्डे—"अभिजिन्नाम नक्षत्रं जयन्तीनाम शर्वरी ।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः ॥"

अभिजिन्नाम अभिजिता नक्षत्रेनैकरेखास्थतया प्रसिद्धं रोहिणी नक्षत्रम् । प्राजापत्यर्क्षेति प्रसंशार्थम्, न तु नियमार्थम्, 'वर्षे वर्षे" इत्यसङ्गतेः ।

सनत्कुमारः—"श्रावणस्य तु मासस्य कृष्णाष्टम्यां नराधिप।
रोहिणी यदि लभ्येत जयन्तीनाम सा तिथिः॥"

भविष्ये—"समायुक्ते तु रोहिण्या निशीथे राजसत्तम।
समजायत गोविन्दो बालरूपी चतुर्भुजः॥
तस्मात्तं पूजयेत्तत्र यथा वित्तानुसारतः"॥

तत्र निशीथो रोहिण्या युतः।

"तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्।
सोपवासो हरेः पूजां कृत्वा तत्र फलं लभेत्॥"

एवञ्च जन्माष्टमीव्रतं प्रतिवर्षङ्कर्त्तव्यम्। निशाविहितत्वादुपवास-प्रधानत्वान्नित्यकाम्यत्वाद्रोहिण्यष्टमीव्रतं प्रतिवर्षं कर्त्तव्यम्। निशीथविहितन्नित्यम्, पूजाप्रधानङ्काम्यम्।

"कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताष्टमी।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम्॥"

साहित्यमर्द्धरात्रेऽष्टमुहुर्त्तात्मिके उभयत्र निशीथे यदि रोहिणीयोगस्तदा विनिगमकमाह—

"किम्पुनर्बुधवारेण सोमेनात्र विशेषतः।
किम्पुनर्न्नवमी युक्ता कुलकोट्यास्तु मुक्तिदा॥"

हेमाद्रौ "तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमथापि वा।
अर्द्धरात्रेऽथवा कुर्यात्पारणं त्वपरेऽहनि॥
अन्यतिथ्यागमो रात्रौ तामसस्तैजशोऽपि वा।
तामसे पारणं कुर्वन् तामसीङ्गतिमाप्नुयात्॥"

इति गरुडपुराणीयमनन्तभट्टलिखितवचनमर्द्धरात्रानन्तरतिथ्यन्तलाभे तत्र पारणानिषेधः। इत्थञ्चार्द्धरात्रेऽष्टम्यां पारणां विधत्ते, सार्द्धप्रहरयामान्तभोजननियमञ्च बाधते। "तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम"। उत्सवः—हरिद्रादधिकर्दमक्रीडारूपः। अशक्तम्प्रति—"यामत्रयो-

र्ध्वगामिन्यां प्रातरेव हि पारणम् ।" एवञ्च तृतीयदिने पारणेत्यदृष्टचरा-ऽश्रुतचरा च व्यवस्था हेया । जन्माष्टमीव्रते नित्यकाम्येऽनुक्रमपि तिथिभान्ते पारणमामनन्ति ।

ब्राह्मे---"अथ भाद्रपदे मासि कृष्णाष्टम्याङ्कलौयुगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ।।
भारावतारणार्थाय क्षत्रियाणां क्षयाय च ।
तस्मात्स तत्र सम्पूज्यो यशोदा देवकी तथा ।।
गन्धैर्माल्यैस्तथा धूपैर्यवगोधूमसम्भवैः ।
सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैः पृथक् ।।
रात्रौ प्रजागरः कार्यो नृत्यगीतसमाकुलः ।
अरुणोदयवेलायां नवम्याञ्च ततः स्त्रियः ।।
रक्तवस्त्रावृताः सर्वा रक्तमाल्यै रलंकृताः ।
नयन्ति प्रतिमा ह्येषां नानाविभवविस्तरैः ।।
नदीतीरं शुभं रम्यं विविक्तं वा महोत्सवैः ।
तत्र स्नानं प्रकुर्वन्ति स्नापयन्ति च शास्ततः ।।
ततः प्रविश्य च गृहं यवान्नं भुञ्जते व्रती ।
युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैस्सह ।।"

अष्टाविंशतितमे रामावतारश्चतुर्युगी, कलियुगात् । तत्र भाद्रकृष्णाष्ट-म्यां पूजाऽत्र प्रधानम् । दिवा पूर्वाह्णे प्रहरद्वयात्मके —

"पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम्' इति वचनात् । कृष्णाष्ट-म्यां व्रतेऽस्मिन् रात्रेरेव स्मरणाद रात्राविति । दिवास्वप्नस्योपवासादौ निषे-धोऽन्यत्रोक्त एव । प्रतिमानयनतत्स्नपनरक्तवस्त्रादिपरिधान - यवान्नभक्षण-मध्वादिभोजनेषु स्त्रीणामेवाधिकारः । पूजादौ पुरुषस्यापि, विशेषस्मरणात् । पुरुषस्यापीत्यत्राधिकार इति शेषः । नचात्राधिकरणविरोधः, अक्ताः शर्करा उपदधीतेत्यनन्तरं तेजो वै घृतमिति प्रशंसाऽन्यथाऽनुपपत्तिरूपक्रम-श्रुताञ्जनस्य विशेषपरत्वमवगमयति । इह तु प्रतिमानयनादौ नार्यधिकार इत्येव विशेषोपादानफलमिति वैषम्यात् । अन्यथा मधुभक्षणरक्तवस्त्रावृतत्व-

स्मरणेन विधवाया व्रतेऽस्मिन्नाधिकाराभावात् प्रसज्येत ।

अत्र नवम्यामित्यभिधानादुक्तरात्रिव्रतद्वये नवम्यनियमा"न्न रक्तवस्त्रावृता" इत्यादिकमन्वेति । नचात्र व्रते पारणासङ्कटवारकवचनावकाश इति सर्वमनाकुलम् ।

## अथानन्तव्रतम्

भविष्ये—"अनन्तव्रतभद्रम्मे सर्वपापहरं शुभम् ।
सर्वकामप्रदं नृणां स्त्रीणाञ्चैव विशेषतः ॥
शुक्लपक्षे चतुर्द्दश्यां मासि भाद्रपदे भवेत् ।
अस्यानुष्ठानमात्रेण सर्वपापं प्रणस्यति ॥"

इदञ्च व्रतं पूजारूपम् । "ततः सितचतुर्द्दश्यामनन्तम्पूजयेद्धरिम् ।"

इति गौतमवचनात् ।

"अनन्तसंसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव ।
अनन्तरूपे विनियोजयस्व ह्यनन्तरूपाय नमो नमस्ते" ॥

इति पूजाडोरकबन्धनयोर्मन्त्रः ।

## अथाश्विनशुक्लाष्टमी

देवीपुराणे—"सोपवासो निशार्द्धे तु यथाविभर्वाविस्तरैः ।
पूजां समारभेद् देव्या नक्षत्रे वारुणेऽपि वा ।।"

वारुणे—शतभिषजि । अष्टम्यां पूजायामनिष्पत्तौ स्मृतिः—

"न दिवा न निशा नच विष्टिहता नच सप्तमिशल्यसमोपहता ।
यदि चाष्टमशेषभवा नवमी अमरैरपि पूज्यतमा कथिता ॥"

नदिवा-विष्टिहता न पूज्येति । न निशा-विष्टिहता तु न पूज्या । नवमीविद्धाया अर्द्धरात्रे प्राप्तौ सप्तमीविद्धाऽर्द्धरात्रिव्यापिन्यपि नाष्टमी पूज्येत्यर्थः ।

समेति - अत्र समाङि त्युपसर्गद्वयम्। शल्यसमेति वा सप्तम्यामभेदेनान्वितम्। परनिपातश्छान्दसत्वात्, विशेषणविशेष्यभावे कामचाराद्वा। आश्विनीमुपक्रम्य--

ब्राह्मे—"दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः।
स्त्रीवृद्धमूर्खबालैश्च भोक्तव्यं पूजितैः सुरैः॥
पूज्याश्च सफलैः पत्रैस्तथा द्वारोर्ध्वभित्तयः।
द्वारोपान्ते प्रदीप्तश्च सम्पूज्यो हव्यवाहनः॥
यवाक्षतघृतोपेतैस्तण्डुलैश्च समर्पितैः।
सम्पूजितव्यः पूर्णेन्दुः पयसा पायसेन च॥
रुद्रः सभार्यः स्कन्दश्च तथा नन्दीश्वरो मुनिः।
गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः॥
औरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः।
पूज्य आश्वैश्च रेमन्तो यथाविभवविस्तरैः॥
ततः पूज्यो निकुम्भस्तु समाषैस्तिलतण्डुलैः।"

दिवापूजा - रात्रेः पूर्वचतुर्यामे। तत्र चतुर्दशी पूर्णिमा वा भवतु न विशेषः, अनशनस्य पूजार्थत्वात्। पूजितैः सुरैरिति नित्यपूजापरम्। अतएवानन्तरं पूज्याश्चेत्याद्यभिहितम्। तेन पूजा रात्रावेव सिध्यति, पूर्णेन्दोरुदितस्यैव पूज्यत्वबोधनात्। प्रदीप्तः सम्यग्रात्रौ ज्वालितः। अक्षतेति घृतविशेषणम्। अविनियुक्ता रुद्रादयस्तूद्देशेन प्रतिमाजलादौ पूज्याः। उक्तायां हव्यवाहनपूजायामधिकारिणमाह - छागवद्भिरिति।

शिष्टाः—"कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम्।
सुगन्धैर्निशि संवेशी रात्रौ जागरणं चरेत्॥"

कौमुदी - आश्विनपूर्णिमा। निशीति पूजयेदित्यत्राप्यन्वेति, मध्ये श्रवणात्। लक्ष्मीपूजायाः कार्त्तिकामावास्यायां विशिष्यविधानात्। एवञ्चैकदेशसंवादादपि रात्रिः पूजाकालः। द्वारोर्ध्वभित्यादीनां पूजाक्रमश्च पाठक्रमादवसेयः। कुबेरपूजामप्याचरन्ति। "सुखरात्र्यां प्रदोषे तु कुबेरं पूजयन्ति च।" इति गौतमीयवचनात्। प्रदोषे त्विति च तदनन्तरकालव्यवच्छेदः। चकाराद्दाश्विनीसमुच्चयः। इन्द्रपूजासमुच्चयश्चेत्याभाति।

पाद्मे--"मकरस्थे रवौ माघे न स्नायादनुदिते रवौ ।
कथं पापैः प्रमुच्येत कथं वा त्रिदिवं व्रजेत् ॥"

शिशिरमुपक्रम्य विष्णुधर्मे- उदितमात्रे सूर्ये ग्रामाद्बहिर्जलाशये स्नात्वाऽग्नौ- ओं प्रजापतये स्वाहेति तिलान्दत्वा शूद्रो ब्राह्मणद्वारा होमङ्कारयित्वा घृतसहितान् स्विन्नान्माषान्दद्यात् ।

यमः – "प्रातः स्नायात्तु सततं द्वौ मासौ माघफाल्गुनौ ।
य इच्छेद्विपुलान्भोगान् चन्द्रसूर्यग्रहोपमान् ॥"

मध्येऽशौचपातेऽपि मज्जनमात्रङ्कार्यम् ।

शिष्टाः—"माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ ।
ब्रह्मघ्नं वा सुरापं वा कम्पतन्तं पुनीमहे ॥"

काशीखण्डे –"किञ्चिदभ्युदिते सूर्ये माघस्नानं समाचरेत् ।
यथाशक्त्या च नियमान्माघस्नायी समाचरेत् ॥"

अत्र प्रातःस्नानमुषस्येव, मध्याह्नस्नानन्तु किञ्चिदभ्युदिते रवौ। अन्यथा "प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि"त्यस्य, अनुदिते रवावेतस्य च बाधापत्तेः ।

"सूर्यग्रहण तुल्या हि शुक्ला माघस्य सप्तमी ।
तस्यां स्नानञ्च दानञ्च महापातकनाशनम् ॥
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।"

स्नानस्य विशिष्योपादानं दिन एव कर्त्तव्यम् ।

स्मृतिः— "फाल्गुनस्य चतुर्दश्यां शिवरात्रिव्रतं शुभम् ।
अतीतायान्तु वै माघ्यां चतुर्दश्यां भवेद्द्विज ॥"

अत्र "माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वरि" इति स्कन्दवचनं शुक्लादिमासमभिप्रैति ।

"त्रयोदश्यां विशालाक्षि एकभुक्तं समाचरेत् ।
उपोषितो वरारोहे चतुर्दश्यान्तु पारणम् ॥

पारणोपवासयोश्चतुर्दश्यामन्वयः, मध्ये श्रवणादतएव—

"उपवासश्चतुर्दश्यां चतुर्दश्यान्तु पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाऽथ वा नवा ॥
तिथिभान्ते च सर्वेषु उपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्द्दशीम् ॥

इति स्कान्देऽभिहितम् ।

"प्रहरे प्रहरे पूजा स्नानञ्चैव विशेषतः ।
उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति ॥"

एवञ्चैकाहसाध्यमिदं व्रतं काम्यम् । वर्षे वर्षे इति वीप्सास्मरणात् । अतएव शिवलिङ्गोपरि बिल्वमहीरूहमधिरूढव्याधमुपक्रम्य—

शिवरहस्ये—"उत्पादभग्नपत्राणि पतन्ति शिवमस्तके ।
अहो शिवस्य माहात्म्यं सैव पूजा महाफला ॥"

इति सकृत्पूजाफलमुक्तम् । चतुर्द्दशवर्षव्यापि चापरं व्रतं काम्यं निबन्धकारेण लिखितं बहव आचरन्ति । ईशानसंहितायाम्--

"एवमेव व्रतं कुर्यात् प्रतिसंवत्सरं व्रती ।
द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकन्तथा ॥
सर्वान्कामानवाप्नोति प्रेत्य चेह च मानवः ।
परात्परतरन्नास्ति शिवरात्रिः परात्परम् ॥
न पूजयति भव्येशं रुद्रं त्रिभुवनेश्वरम् ।
जन्तुर्जन्मसहस्रेण भ्रमते नात्र संशयः ॥"

पूजाप्रकारः स्कान्दे-- "आगमोक्तविधिं कृत्वा प्राप्नोति परमं पदम् ।"

ईशानसंहितायां—"शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् ।
आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् ।।"

एवं चाण्डालस्याप्यत्र व्रतेऽधिकारः । आगमविधिस्तु-- प्रातर्निवेद्य अद्या-न्यजन्मसमुपार्जितपापक्षयेन्द्रादिलोकगमनपूर्वकानेकभोगभुक्तिभूतलराज्यप्राप्ति-तदुत्तरपूजितपरमस्थानशिवसायुज्यकामश्चतुर्दशवर्षाणि यावत्प्रतिफाल्गुन-कृष्णचतुर्दशीशिवरात्रिव्रतमहङ्करिष्ये, इति सङ्कल्पयेत् । कण्ठे काल इतिवद-लुकसमासादद्यादीति साधु ।

यद्वा अद्येत्यव्ययं समस्यते, "अद्यप्रभृत्यवनताङ्गि तवास्मि दासः" "ततःप्रभृति संक्रान्ता" विति च प्रयोगदर्शनात् प्रहरे प्रहरे रात्रौ पञ्चवक्त्रं शिवं पञ्चगव्येन पञ्चामृतेन वा स्नापयित्वा यवगोधूमान्यतरचूर्णेन रूक्षां विधाय सर्वौषधिजलेन स्नापयित्वा उत्तरवक्त्रे वामदेवमावाह्य---

"नमस्ते वामदेवाय सर्वाय शशिशेखर ।
पापशुद्ध्यर्थमर्घोऽयं गिरीश प्रतिगृह्यताम् ।।"

इत्यर्घन्दत्वा-- "हाँ वामदेवाय नमः" इति गन्धादि दद्यात् । पूर्ववक्त्रे--तत्पुरुषमावाह्य--

"नमस्तुभ्यं विरूपाक्ष नमस्ते दितिजान्तक ।
तत्पुरुष नमस्तेऽस्तु अर्घोयम्प्रतिगृह्यताम् ।।"

इत्यर्घन्दत्वा-- "हीं तत्पुरुषाय नमः" इति गन्धादि दद्यात् । दक्षिण-वक्त्रे अघोरमावाह्य--

"नमस्ते शूलहस्ताय नमस्ते दितिजान्तक ।
अघोराय नमस्तुभ्यमर्घोयम्प्रतिगृह्यताम् ।।"

इत्यर्घन्दत्वा- "हूँ अघोराय नमः" इति गन्धादि दद्यात् । पश्चिमवक्त्रे-सद्योजातमावाह्य---

"नमस्ते सद्योजाताय नमः कैलाशवासिने ।
नमस्ते देवदेवेश अर्घोयम्प्रतिगृह्यताम् ॥"

इत्यर्घन्दत्वा-- "ह्रां सद्योजाताय नमः" इति गन्धादि दद्यात् । ईशानवक्त्रे ईशानमावाह्य--

"नमस्ते देवदेवेश नमस्ते मोक्षदायिने ।
ईशानाय नमस्तुभ्यमर्घोऽयं प्रतिगृह्यताम् ॥"

इत्यर्घन्दत्वा-- "ह्रौं ईशानाय नमः" इति गन्धादि दद्यात् । मध्ये- ह्रौं शिवाय नम इति शिवमर्घ्यादिभिः पूजयेत् । वस्त्रं हिरण्यञ्च दत्वा प्रणमेत् । नृत्यगीतादिभिर्जागरणं शिवधर्मश्रवणञ्च कुर्यादिति । ईशानतत्पुरुषाघोर-सद्योजातवामदेवा इति क्रमः क्वचित् । सद्योजातवामदेवाघोरतत्पुरुष-ईशान-क्रमेण तु बौधायनो न्यासमाहस्म ।

नागरखण्डे-- "उपवासप्रभावेण बलादपि च जागरात् ।
शिवरात्रिस्तथा तस्य लिङ्गस्यापि प्रपूजनात् ॥"

एवञ्च मिलितत्रयप्रधानकं व्रतं शिवरात्रिः । इदञ्च व्रतम्प्रदोषनिशीथोभयव्यापिनी चतुर्दशी चेत्तदा त्रयोदशीविद्धायाङ्कार्यम् । परदिने चेदुभय-व्यापिनी तदा तत्रैव । तदुक्तम् –

स्कान्दे—"त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्वा चतुर्दशी ॥
निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा भवेत् ।"

यदा तु पूर्वनिशीथे परदिने प्रदोषे च चतुर्दशी लभ्यते तदा त्रयोदशी-योगप्राशस्त्यादाद्या ग्राह्या । उभयदिने निशीथालाभेप्याद्यैव, प्रदोषप्राप्तेः त्रयोदशीप्राशस्त्यात् प्राथम्याच्चेति दिक् ।

अथाभिनववर्द्धमानीयपरिभाषायां लिङ्गपूजाव्रतप्रतिष्ठा —

लिङ्गपुराणे—"अथातः सम्प्रवक्ष्यामि प्रतिष्ठा लैङ्गिकस्य च ।
येन सम्यग्विधानेन व्रतं सम्पूर्णतामियात् ॥

समाप्ते तु व्रते राजन् विनिर्माय महेश्वरम् ।
स्नापयित्वा शुभस्थाने सम्पूज्यार्घादिभिः क्रमात् ॥
गन्धैर्माल्यैस्तथा धूपैर्नैवेद्यैर्विविधैस्तथा ।
हिरण्यं गाञ्च वासांसि शिवाय विनिवेदयेत् ॥
दण्डवत्प्रणतो भूत्वा इमं मन्त्रमुदीरयेत् ।
अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वर ॥
पूजितोऽसि महादेव तत्क्षमस्व भ्रमात्कृतम् ।
यद्यप्युपहतैः पुष्पैश्शस्तैर्वा भावदूषितैः ॥
केशकीटापविद्धैश्च पूजितोऽसि मया विभो ।
अन्यत्राशक्तचित्तेन क्रियाहीनेतरातयोः ॥
मनोवाक्कायदुष्टेन पूजितोऽसि त्रिलोचन ।
यच्चोपहतपात्रेण कृतमर्घादिकम्मया ॥
तामसेन च भावेन तत्क्षमस्व मम प्रभो ।
मन्त्रेणाक्षरहीनेन पुष्पेण विकलेन च ॥
पूजितोसि महादेव तत्सर्वं क्षम्यताम्मम ।
व्रतं सम्पूर्णतां यातु फलञ्चाक्षयमस्तु मे ॥
एवं स्तुत्वा नमस्कृत्य विसर्ज्य च महेश्वरम् ।
नैवेद्यानि तथा वस्त्रं भस्माङ्गाय निवेदयेत् ॥
ब्राह्मणान् भोजयित्वा च दद्यात्तेभ्यश्च दक्षिणाम् ।
यथाशक्ति प्रकुर्वीत हिरण्यं व्रतदक्षिणाम् ॥"

ब्राह्मणेभ्यो भोजनदक्षिणा ताम्रादिरूपाणि ।

## अथ प्रकीर्णकम्

मनुः— "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥"

पारस्करः—"विधिर्विधेयस्तर्कश्च वेदः" ।

विधिर्लिङादिसमभिव्याहृतवाक्यम् । अर्थवादश्चानेनोप - संगृहीतः । विधेयो विनियोज्यो मन्त्रः ।

"मीमांसासञ्ज्ञकस्तर्क्कः सर्ववेदसमुद्भवः ।
सनो वेदो रुमाप्राप्त - काष्ठादिलवणात्मवत् ॥"

इति भट्टाः । रूमा- लवणाकरस्तत्पतितकाष्ठादि यथा लवणात्मकार्यं कारणोपचारादेव वेदार्थविवेचकत्वात्तर्कोऽपि वेदपदवाच्यः, उपचारादित्यर्थः । स्मृति - मन्वादिसंहिता । षट्त्रिशत् स्मृत्यन्तराणि -- कुथुमि-गोभिल-गौतम-मैत्रायणीयादीनि । अष्टादशपुराणानि इतिहासाश्च, वेदार्थानुरक्त-स्मृतिमूलकत्वात् ।

भारते-- 'अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा ।
अनुग्रहश्च ज्ञानञ्च शीलमेतद्विदुर्बुधाः ॥"

त्रिविधाद्रोहभूतसामान्यानुग्रहशास्त्रार्थज्ञानवतां पञ्चानामेकवाक्यतया सन्दिग्धार्थनिर्णय इत्यर्थः । तुष्टिः सन्दिग्धेष्वर्थेषु विशेषार्थे समीचीनबुद्धिः ।

जाबालः - "श्रुतिस्मृतविरोधे तु श्रुतिरेव गरीयसी ।"

भविष्ये--"स्मृत्यर्थविरोधे तु अर्थशास्त्रस्य धारणम् ।
परस्परविरोधे तु न्याययुक्तं प्रमाणवत् ।"

परस्परेति-- स्मृत्यर्थशास्त्रयोर्विरोध इत्यर्थः । न्यायो - युक्तिः । स्मृति-शास्त्रविकल्पस्तु व्यवस्थासम्भवे सति । अदृष्टार्थकयोः स्मृत्योर्वेदयोर्वा विरोधे विकल्पः । स च सति सम्भवे व्यवस्थित इतरथा त्वैच्छिक इत्यर्थः ।

छन्दोगपरिशिष्टे - "अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चा यथा क्रिया ॥"

आद्याचाह—"प्रधानस्याक्रिया यत्र साङ्गन्तत्क्रियते पुनः ।
तदङ्गस्याक्रियायान्तु नावृत्तिर्नापि तत्क्रिया ॥"

अङ्गक्रियापि नास्ति किन्तु योगियाज्ञवल्क्यकथितविष्णुस्मरणम्--

"यस्य स्मृत्या च नामोक्त्या तपोयागक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥"

इत्यादिरूपम् । द्वितीये त्वाह—

"स्वशाखाश्रयमुत्सृज्य परशाखाश्रयञ्च यत् ।
कर्त्तुमिच्छति दुर्मेधा मोघन्तत्तस्य चेष्टितम् ॥
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतोभवेत् ॥
यन्नाम्नातं स्वशाखायाम्पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि कर्मवत् ॥"

यत्कर्म स्वशाखायमां स्वगृह्ये वा सामान्यविधौ वा न प्रोक्तं तन्न कार्यम् । यत्तु प्रोक्तं तत्रेतिकर्त्तव्यता स्वशाखागृह्योक्तैव निराकाङ्क्षत्वे ग्राह्या । आकाङ्क्षायान्तु परोक्ताऽपीत्यर्थः । अल्पाभिधाने कर्मपूर्त्याकाङ्क्षा वर्त्तते । यथा केशवम्पूजयेदित्यत्र कथमित्याकाङ्क्षा, सा च पञ्चोपचारादिबोधकैः परवाक्यैर्वासीनत्वादिबोधकवाक्यैश्च समाधीयते ।

तृतीयेत्वाह--- "समाप्तौ यदि जानीयान्मयैतदयथाकृतम् ।
तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥"

प्रधानकृते व्युत्क्रमकृताङ्गानां विध्युक्तक्रमेण पुनःकरणम् । प्रधानानां व्युत्क्रमकरणेऽपि विध्युक्तक्रमेण पुनःकरणं यावन्ति तत्क्रमेण कृतानि तावन्ति न पुनः कार्याणीत्यर्थः ।

यथा-- "आसीन ऊर्ध्वःप्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता ॥"

यत्र दिङ् नियमो नास्ति जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशो ज्ञेया ऐन्द्री सौम्याऽपराजिता ॥
कर्मोपदिश्यते यत्र कर्तु रङ्गन्न चोच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

प्रह्वो नम्रः । सौम्या उत्तरा । अपराजिता ऐशानी ।

स्मृतिः--"आसीनः प्राङ् मुखो दर्भपाणिः पत्नी तदुत्तरा ।
द्विराचान्तो बद्धशिखो सर्वकर्मस्वयं विधिः ॥"

स उत्तरदिक्स्थो यस्याः सा तदुत्तरा पतिदक्षिणस्था । छन्दोगपरिशिष्टे--

"ऊर्ध्वन्तु त्रिवृतङ्कार्यं तन्तु - त्रयमधोवृतम् ।
त्रिवृत्तञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥
पृष्टवंशे च नाभ्याञ्च धृतं यद्विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यान्नातो लम्बन्न चोच्छ्रितम् ॥"

तन्तुत्रयं ननु त्रिगुणीकृतम् एकस्तन्तु नवा नवतन्तवः । दक्षिणावर्त्तानान्तरन्त्रिगुणीकरणम्, वामावर्त्तेन कण्ठलम्बितश्च नाभिकटिस्पर्शिनोऽस्य त्रिगुणीकृतस्य नवगुणितस्य प्रवरसङ्ख्यकग्रन्थिपूर्वकवृत्तिमानेको ग्रन्थिः कार्य इत्यर्थः । एवञ्च नवगुणितस्य छेदनाभावे क्षतिविरहादुपनयनोपरमनयोर्मङ्गल्ययोस्तथाऽऽचारो युक्तः । अन्यत्र छेदनं तदभावश्चानेकतन्तुसत्वेऽपि तन्तुत्रयसत्वात् नवतन्तुकस्यान्यत्र विधानाच्च ।

विष्णुपुराणे--"क्रियाञ्यः कुरुते मोहादनाचम्येह नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियास्सर्वा न संशयः ॥"

क्रियाङ्गमेकमाचमनं पादप्रच्छालनादौ शुद्धः ।

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥"

सदा वैदिकदेवकर्मकाले यद्वैदिककर्म न कृतम् । न कार्य्यकारियज्ञोप-

वीतानीत्यधिकृत्य स्मरन्ति - जीर्णाण्यम्भसि निःक्षिपेत् ।

"उपवीतं ब्रह्मसूत्रं प्रोद्धते दक्षिणे करे ।
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बित" ।। मित्यमरः ।

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ।।"

आनिधनात् – कर्मसमाप्तिपर्यन्तम् । निगमपरिशिष्टे - निवीतं ग्राम्यधर्मेषु । ग्राम्यधर्मो - मैथुनम् । आद्यर्थकं बहुवचनेन मूत्रपुरीषोत्सर्गसनकादितर्पणमनुष्ययज्ञानामभिधानम् ।

"निगमः कार्पासक्षौमगोबालशणाविक कुशोद्भवम् ।
सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः ।।"

एतेन त्रैवर्णिकानां पुंसामुपवीतधारणम्पुरुषार्थोऽपि सम्भवतीत्यनेन पूर्वसम्भवे सति नोत्तरं ग्राह्यमिति दर्शितम् । क्षौममतसीप्रभवमिति प्राञ्चः । वस्तुतस्तु लोहितपट्टसूत्रप्रभवमित्यर्थः, राज्ञामुचितत्वात् । तुल्यन्यायेन लौहित्यप्राप्तेः माणवकविवाह्यकन्ययोरविशेषेण रक्तवर्णौचित्यात् । "वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृत" इति वचनस्वरसात् । अतएव कार्पासाद्युपवीतमपि रक्तं माणवकस्य परिधेयम् । ब्राह्मणाष्टके देयं पीतमपि, वस्त्रम् रक्तमनिषिद्धम् ---"क्षौमं पट्टे दुकूले" चेति विश्वः ।

उपवीतशून्यानान्तु नापसव्यम्, अपसव्यं वासो यज्ञोपवीते कृत्वेति सहितयोरेवापसव्यविधानात् । शिखाऽपि तेषां नास्ति, उपवीतसमभिव्याहृतत्वात् । अत्र बद्धशिखी यज्ञोपवीतीत्याचम्येति कात्यायनवचनं शिखाबन्धनोपवीतग्रहणाचमनानां क्रमं बोधयति । तेन शिखोपवीतयोः प्रथमं शिखाबन्धनमित्यायाति । एतद्बोधनमेव वचनारम्भप्रयोजनमित्याभाति ।

वशिष्ठः--"शुक्लमहतं वासो ब्राह्मणस्य, कार्पासं माञ्जिष्ठं हारिद्रं क्षत्रियस्य, पीतं कौशेयं वैश्यस्य, सर्वेषां वा तान्तरमरक्तम्" । सर्वेषामित्यभिधाना-

द्विवाहादावाचाराच्च पीतं ब्राह्मणक्षत्रयोर्वस्त्रं विवाहोपनयनयोर्देवमातृ मनुष्यादेः ।

प्रचेताः—"इषद्धौतं नवं श्वेतमहतं यन्न क्षालितम् ।
अहतन्तद्विजानीयात् सर्वकर्मसु पावनम् ॥"

ईषन्मात्रं क्षालितं नतु रजकद्वाराक्षालितम् । अहतमनुपहतं स्नानादौ । कन्यातुल्यधर्मकत्वाद्वरमाणवककन्यादानवाग्दानस्वीकारमाणवकस्योपनयनेषु यद्द्विजाञ्च लोहितोष्णीषश्रुत्या यज्ञे रक्तवस्त्रधारणं न्यायसामान्ययज्ञोपवीतमपि रक्तं गृह्यते ।

योगियाज्ञवल्क्यः - "परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् ।
धर्मे कर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥"

कक्षा पश्चाद्वस्त्राञ्चलमानम्बद्धेति वहिःस्थिता भवेदासुरी । कक्षापदम्पुरोञ्चलस्यापि बोधकमिति भावः ।

शातातपः—"सव्यादंशात्परिभ्रष्टं कटिदेशधृताम्बरम् ।
एकवस्त्रं विजानीयाद् दैवे पित्र्ये च कर्मणि ॥"

व्यासः—"यदार्द्रवासाः कुरुते जपहोमप्रतिग्रहान् ।
सर्वन्तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥"

वहिर्ज्जानु—अन्तरुर्वोररत्नी अकृत्वा ।

बौधायनः—"होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनिके जपे ॥
कषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगं भवति हव्यकव्येष्वथो हविः ॥"

यत्किञ्चिद्दिव्यासव्युक्तं तदरक्तैरेव वासोभिः कुर्यात् । इदञ्च नारीक्षत्रभिन्नपरम् । रक्तवस्त्रावृता,— इति कृष्णाष्टमीव्रते चान्यत्र चाभिधाना-

द्विवाहे कन्यारक्तवस्त्रग्रहणाचाराच्च नार्याः वशिष्ठेन माञ्जिष्ठस्य क्षत्रियाणा-मुक्तत्वात् , शुक्लमेव सदा वास इति नारीवृते हरिवंशवचनं विधवापरमिति मन्तव्यम् । स्नानानन्तरं सन्ध्याप्रयोगेऽग्निहोत्रे रक्तं निषिद्धं, शुक्लं शस्तम् ।

"यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
सर्वन्तन्निष्फलं विद्याद्बहिर्ज्जानु च यत्कृतम् ।।"

जलस्थलयोर्वर्त्तमानः । "नान्तर्वासा न बहुवासा" इत्यादि निषेधा-दन्यत्र द्रष्टव्या ।

मनु -- "प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्मतेर्जायते फलम् ।।"

मार्कण्डेये— 'सूर्योदयम्बिना नैव स्नानदानादिकाः क्रिया. ।
अग्नेर्विहरणञ्चैव ऋत्वभावश्च लक्ष्यते ।।"

विशेषविध्यभावपरमिदम् । विरहणमुदितहोमिनाम् ।

भविष्ये-- "कर्मणाम्फलमाप्नोति न्यायार्जितधनश्च यः ।"

अन्यायोपार्जितधनसाधितकर्म निःफलमिति तात्पर्यम् ।

यमः-- नच कुर्याद्विपर्यासं वाससो नच दूषणम् ।
वर्ज्यञ्च विदशं वस्त्रमत्यन्तोपहतञ्च यत् ।।"

विपर्यासमुत्तरीयतापन्नस्याधः परिधानम् । अन्तरीयैकदेशे कल्पयित्वो-त्तरीयकमिति वचनसम्बादात् । एवञ्च कदाचिदुत्तरीयतया धृतस्याधः परिधानं निषिद्धमित्यबद्धमेव निबन्धकृता लिखनात् । त्रिगुणी कृत्योत्तरीयतया धृत-स्याधः परिधानाविधानात् । विवाहे तु—

पारस्कर.-- एकञ्चेद्वासस्तस्योत्तरवर्गेणाच्छादनात् ।" उत्तरवर्गोऽ-धरीणाञ्चल भागः । "प्रत्यहं छालयेद्वासो दैवे पित्रे च कर्मणीति"-- तद्दिने क्षालनविधानेऽपि सूर्योदयपूर्वकार्ये वा तद्दिवसीयं क्षालनमुच्यते । सूर्योदयपूर्वञ्च पूर्वाहोरात्रासुवृत्तेः । उदितहोमस्तु -- सप्तवातधौतेण पट्टव-

स्त्रेण वा कार्य्यः । दूषणङ्काषायादि - सम्बन्धम् । अत्यन्तोपहतम्--सुरा पुरीषादिलिप्तम् । एवञ्च कर्णमलाद्यल्पोऽपधातेऽपि वैदिककर्माण्यकाले वस्त्र-धारणमविरुद्धम् ।

> "दानमाचमनं होमं भोजनं देवतार्च्चनम् ।
> प्रौढपादो न कुर्वीत स्वाध्यायम्पितृतर्पणम् ॥
> आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।
> कृतावसक्थिको यश्च प्रौढपादः स उच्यते ॥"

जानुनोर्ज्जङ्घयोरारूढपादो वा कृतपर्यङ्कबद्धो वेति मध्यचरणद्वयार्थः ।

स्मृतिः— "सव्रणः सूतकः सूती मत्तोन्मत्तरजस्वलाः ।
मृतबन्धुरशुद्धश्च वर्ज्याण्यष्टौ स्वकालतः ॥"

सव्रणो—बहुव्रणः, प्रवहत्सु व्रणेषु चेति निषेधैकवाक्यत्वात् । तृणवेधजन्य-दन्तमूलव्रणे त्वहोरात्रव्यापकमशौचम् । उषसि दन्तमूलव्रणे जाते सूर्योदयानन्तरं नाशौचम् ।

> "उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
> जननम्वा विपत्तिम्वा यस्याहस्तस्य शर्वरी ॥"

इत्यत्र वाकारेण दन्तव्रणसमुच्चयावगमात् । सूतको-जननाशौची, सपिण्डादिः । सूती - प्रसववती, तत्कारयित्री च । वैपरीत्येन वा पदयो-रेतावर्थौ । मत्तो धूतूरसंक्रामणादिना उन्मत्तो वा तद्दूषितः । रजस्वला-रक्तसम्ब-न्धादनन्तरं दिनत्रयं दिनचतुष्टयञ्च "दैवे कर्मणि पित्रे च पञ्चमेऽहनि शुध्यती" तिवचनात् । भारते—"स्नाताञ्चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः" ।

वसिष्ठः—त्रिरात्रेण रजस्वला शुचिर्भवति, प्रसवकालीन रजोयोगतः । "सूतिका सर्ववर्णानां दशरात्रेण शुध्यति ।" इति ।

पैठीनसिः— "सूतिकां पुत्रजननीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेन्मासेन स्त्रीजननीम् ।" पाकसम्भोगादिकं पू[illegible]श्राद्धादिकञ्च विंशति-

रात्र्यनन्तरं स्नाताङ्कारयेत्। स्पृश्या तु दशरात्रानन्तरं स्नाता भवति। "अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।" पूजापदेन-- स्नानतर्पण-स्तवपाठादिकमाभ्युदयिकश्राद्धञ्चोपलक्ष्यते, तुल्यन्यायात् ।

मृतबन्धुर्मृतसपिण्डादिः । अशुद्धः - पातकपञ्चकवान्, शूद्रीगर्भकृद्विप्रः, कदर्य्यः, पुरीषादिमलदूषितश्च । स्वकालत इत्यभिधानाद् व्रणमरणजनन-निमित्तकपक्षिण्याद्यशौचेष्वहोरात्राव्यापकत्वमवगम्यते ।

"ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ।
स्त्रीशूद्रकरसंस्पर्शो वज्रादपि सुदारुणः ॥"

जननमरणव्रणाशौचे विप्रस्य शिवादिपूजने नित्येऽधिकारः। अशौचे स्पर्शपूर्विकायां पूजायाञ्च विप्रस्यैवाधिकारः। स्पर्शनिषेधश्च शालग्रामशिला-मात्रे स्त्रीशूद्रयोरेवोक्तवचनात्। अशौचे तयोः क्षत्रियवैश्ययोश्च पूजानिषे-धोऽपि। अतएवोक्तम्--- "सववर्णैरहम्पूज्यः शिलां शूद्रो न च स्पृशेत् ।" पूजा तु स्पर्शम्विना शालग्रामशिलायाम्ताभ्यामपि कार्या।

'पूजितोऽहं न तैर्मर्त्यैः स्नापितोऽहं न तैर्नरैः।
न कृतं मर्त्यलोके यैः शालग्रामशिलार्चनम् ॥"

इति वचनात्। पुंस्त्वमविवक्षितमुद्देश्यगतत्वात्।

नारसिंहे— तस्मात्सर्वहितम्वदेदित्युपक्रम्याष्टाक्षरमन्त्रकरणकपूजाभिधा-नात्। प्रणवादिश्चतुर्थ्यन्तनमोन्तनारायणशब्दश्चाष्टाक्षरमन्त्रः।

आगमे--- "तथोङ्कारादिकं मन्त्रं शूद्रस्तु यदि पाठ्यते ।
आदिवर्णविलोपेन मन्त्रानेव हि हन्यते ॥"

मन्त्रः पूजायां पद्मपुराणीयस्नाने च विहितः। शूद्रपदम्-- स्त्रिया अप्युपलक्षकम्। नामोन्त - प्रणवादिनेति त्वोंकारबलेन शूद्रतर्पणव्यावृत्ति-बोधकवचनमपि प्रणवपरित्यागङ्गमयति। एवञ्च शिवाय नमः, एष गन्धः

शिवाय नमः इत्यादिपूजारम्भे सिध्यति, नमःपदस्य कर्मणि निपातनात् । तेन च कर्मणोऽभिहितत्वाद् गन्ध इति प्रथमा ।

भारते--"गृहीत्वोदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासस्तु गृह्णीयाद्यावत्सङ्कल्पयेद्बुधः ॥"

औदुम्बरं ताम्रमयम् । उदङ्मुखत्वविधानादैशानीपूर्वाभिमुखत्वव्यवच्छेदः । गृह्णीयात्कुशत्रयतिलैरौदुम्बरपात्रवह्निजलेन च सङ्कल्पयेत् । यद्वेति कुशतिलजलानि दक्षिणकरेण धृत्वा सङ्कल्पयेदित्यर्थः । उदङ्मुख इत्यत्रावृत्तौ मानाभावेन द्वितीयपक्षे पूर्वैशानीमुखत्वमविरुद्धम ।

देवलः - "अकृत्वा प्रातराहारं स्नात्वाऽचम्य समाहितः ।
सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत ॥"

आहारमर्थात्-- पूर्वदिवसीयद्वितीयव्रतसन्निहितत्वात् । प्रातर्मुहूर्त्तत्रयमध्ये व्रतमाचरेत् । निवेदने प्रातः कर्त्तव्यताविशिष्टान्वयात् क्त्वाश्रुतेश्चेति मन्तव्यम् । अत्र व्रतपदार्थोऽनशनादिसङ्कल्पः, सङ्कल्पयेदित्यादिना सङ्कल्पस्य विधेयतया तदेकवाक्यतायां लाघवादेवञ्च सङ्कल्पं विना नित्योपवासोपवासाभ्यङ्गकपूजादिव्रतं न सिद्ध्यति । विधेयानिर्वाहादिति कृष्णाष्टम्यादिव्रते नित्यतया सङ्कल्पो नास्तीति रुद्रधरोपाध्यायनिबन्धोऽबद्धः । एकादश्यादौ सङ्कल्पम्बिनोपोषणे कृते भोजनजन्यपापानुदयो हेत्वभावादिति वाचस्पतिमिश्रोक्तिरप्ययुक्ता, न हि भोजनस्य पृथगस्ति निषेधः । किन्तूपवासव्रताकरणे निन्दाऽर्थवादः । स च भोजन इव सङ्कल्पानाचरणानियमादिकं नास्ति, वाससीयज्ञोपवीतधर्मत्रिमरत्वादिकमिवेत्याकलयामः ।

ब्राह्मे--"वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे मासि त्रयोदश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्याम्वै घोरं कलियुगन्तथा ॥

युगारम्भास्तास्तिथयो युगाद्यास्तेन विश्रुताः ।
सूर्यस्य सिंहसङ्क्रान्त्यामन्तः कृतयुगस्य च ॥
अथ वृश्चिकसङ्क्रान्त्यामन्तस्त्रेता युगस्य च ।
ज्ञेयश्च वृषसङ्क्रान्त्यां द्वापरान्तश्च सङ्ज्ञया ॥
तथा कुम्भस्य सङ्क्रान्त्यामन्तः कलियुगस्य च ।
युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते ॥"

अहनि तिथौ त्रयोदश्यां शुक्लादेर्भाद्रस्य कृष्णपक्षीयायां प्रौष्ठपद्यूर्ध्वं कृष्ण-त्रयोदशीति विष्णुसम्वादात् । श्राद्धमित्युपलक्षणम् ।

भविष्यपुराणे – "युगादौ विषुवक्रान्तौ पुण्ययोगे च सर्वशः ।
यत्र यत्रार्च्यते देवी विषमाक्षो वृषध्वजः ॥
तत्र तत्राक्षयं पुण्यमिति प्राह पितामहः ॥"

यमः—"आषाढ्यामथ कार्त्तिक्यामाघ्यां त्रीन् पञ्च वा द्विजान् ।
तर्पयेत्पितृपूर्वन्तु तदस्याक्षय - मुच्यते ॥"

इति । पितृपूर्वम् - पितृदैवतकान्नगपूर्वकम् ।

विष्णुधर्मोत्तरे— कार्त्तिकाषाढफाल्गुनपूर्णिमातुलामेषकर्कसङ्क्रमाश्च दाने महाफला इत्यभिहितम् । तत्र महत्त्वमक्षयत्वमेव । तच्च कल्पयन्ति स्थायित्वम् ।

मात्स्ये— "अश्वयुक् शुक्ल नवमी द्वादशी कार्त्तिके तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी माघस्य सप्तमी तथा ॥
श्रावणस्याष्टमी कृष्णा तथाषाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः ॥"

अत्र तृतीया चैत्रमाघस्येति पाठः प्रामादिकः ज्योतिश्शास्त्रे कल्पतरुविरोधात् । तथा शब्दाः शुक्लार्थकाः सप्तमीदशम्योरप्यनुक्ताः फाल्गुनस्य कृष्णादेः । "नभस्य मासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे" इति विष्णुपुराणे शुक्लाद्योर्भाद्रमाघयोः कृष्णपक्षत्रयोदशी- पञ्चदश्योर्मन्वादित्वकथनात् । एतद्विरुद्धं वाचस्पतिमिश्रहरिहरव्याख्याने प्रत्याख्यातव्ये ।

"आषाढी कार्त्तिकी माघी तिथयः पुण्यसम्भवाः ।
अप्रदानवतो यान्तु यस्य यर्योऽनुमते गतः ॥"

इति भरतशपथादासु दानं नित्यम् । स्नानदानादिकमुपक्रम्य स्मृतिः---

"इन्दोर्लक्षगुणं प्रोक्तं रवेर्द्दशगुणं ततः ।
गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटी रवेर्द्दश ॥"

इन्दो रवेरित्यनन्तरं ग्रहण इति शेषः ।

अथ सर्वौषधिगणः । छन्दोगपरिशिष्टे—

"व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाँश्चोषधयस्सप्त विपदो घ्नन्ति धारिताः ॥"

वाजसनेयिनान्तु—

"मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शठीचम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः ॥"

मुरा- भचौर इति प्रसिद्धः । मांसी-- जटामसी । कुष्ठं कूढ इति प्रसिद्धम् । शैलेयं - शिलाजतु इति । रजनीद्वयम् हरिद्रा, दारुहरदि इति । शठी - शाठीति प्रसिद्धा सुगन्धिः ।

विष्णुपुराणे— "व्रीहयः सयवामाषा गोधूमाश्चणकास्तिलाः ।
प्रियङ्गु सप्तमाश्चैते अष्टमस्तु कुलत्थकः ॥
श्यामाका स्त्वथ नीवारा जर्त्तिलाः सगवेधुकाः ।
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने ॥"

जर्त्तिलाः - स्वयञ्जाततिलाः । गवेधुकः - गरण्डी ।

इति छन्दोगानां स्वीयपरिशिष्टोक्तसप्तकमेवान्तरङ्ग्राह्यम् ।

गौडाः—"श्रवणार्कव्यतीपातैरमा चेत्पौषमाघयोः ।
अर्द्धोदयः स विज्ञेयः सूर्यपर्वशताधिकः ॥"

पातो व्यतीपातः । शुक्लादेः पौषस्य, कृष्णादेर्माघस्यमावास्या । कृष्णादि-पौषामावास्यायां श्रवणानक्षत्रासम्भवात् । सूर्यचन्द्रयोस्सङ्गमः खल्वमावास्यायाम् । पौषे असम्भव इति बृद्धज्योतिर्विदः । तदयुक्तम्, अग्रहणमलमासानन्तरं पौषामावास्यायामुत्तराषाढस्थसूर्ये सौरपौषशेषपतितायां श्रवणसम्भवात् । सूर्येन्दुसङ्गमो हि कुहूलक्षणं राशिनक्षत्रान्तरायेण हि दृष्टेन्दुः सिनीवाली भवति । पुष्यनक्षत्रस्य पूर्णिमायामिव श्रवणानक्षत्रस्य पौषामावास्यायां माघामावास्यायाञ्च कादाचित्कः सम्बन्धः सम्भवतीत्याभाति । अन्यथा पौषे माघ इति क्रियेत । अत्र सूर्यसर्वाधिस्थाद्रात्रावप्ययं योग आदरणीय इति भ्रमः । फलबोधनमात्रपरत्वाद्वाक्यस्य निशास्नाननिषेधाबाधात्, सूर्यपर्वणो निश्यदर्शनाच्च ।

"वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत शतसूर्यग्रहैस्समा ॥"

अत्रापि रात्रियोगो न गण्यः । स्त्रीणाञ्चात्र स्नानेऽधिकारो नास्ति, नित्यभिन्नस्नानं हि स्त्रीणां शतभिषजि निन्दितम् ।

जाबालः-- "सङ्क्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः ।"

दिवातनविष्णुपद्याम-टावष्टौ घटिकाः पश्चात्पूर्वमित्युभयतः षोडशदण्डाः पुण्यकालः । तथा-- "अर्वाक् षोडश विज्ञेयाः नाड्यः पश्चाच्च षोडश ।"

अत्र व्यवस्था--"षडशीतिमुखेऽतीते कन्ये च विषुवद्द्वये ।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥"

अयने-- दक्षिणायने । पुण्यं षोडशदण्डात्मकसर्वाणीत्यादिवाक्यात् । तद्वाक्यम्-- दिवातनविष्णुपद्यां वा त्रिंशद्दण्डपुण्यकालत्वबोधकमिति मिश्राः ।

तच्चिन्त्यम्, तात्पर्यगौरवात्। षडशीतिविषुवायनेषु दण्डसङ्ख्यानियमालाभप्रसङ्गाच्च। पञ्चदशदण्डपुण्यत्वबोधकवचनानि तु न व्यवच्छेदपराणीत्यविरोधः। रात्रिसङ्क्रमे तु--

देवीपुराणे-- "मानार्द्धम्भास्करे पुण्यमपूर्णे शर्वरीदले।
सम्पूर्णे तूभयोर्द्दे यमतिरेके परेऽहनि॥"

सप्तमुहूर्त्तमध्ये निशि चेत्सङ्क्रमस्तदा पूर्वदिने तृतीयचरमयामौ पुण्यकाल इत्यर्थः।

"तदहः पुण्यमिच्छन्ति गर्गगालवगौतमाः" इति वचनन्तु द्वित्वपलावशिष्टदिनसंक्रमपरम्। द्वित्वपलोदितसूर्यकदिने पुण्यकालः। अष्टमुहूर्त्तसंक्रमे तु पूर्वदिनेऽष्टौ परदिने चाद्यौ यामौ पुण्यकालः, नवमादिमुहूर्त्तसंक्रमे तु परदिन एवाद्यौ यामाविति दक्षिणायनसङ्क्रमपरञ्च। नच

"राहुदर्शनसङ्क्रान्तिविवाहात्यय-वृद्धिषु।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च॥"

इति वचनेन तत्र निशायां स्नानदानादिसम्भवान्नैवमिति वाच्यम्। अहन्यसम्भवे निशि सङ्क्रमस्नानादिति तदर्थात्। अथवा युगान्तसंक्रमश्राद्धपरम्। तदहः पुण्यमिति श्राद्धमपि, निशि राहुदर्शनम्विना--

'सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्॥"

इति वचनात्। अतएव "नैमित्तिकानि कर्माणि निपतन्ति यदा तदेति" प्राप्तान्यपि तीर्थश्राद्धपुत्रजन्माभ्युदयिकविवाहास्थिसञ्चयनादौ निमित्तश्राद्धानि न निशि कुर्वन्ति। स्नानदानादिकमिति तदेव कर्ममात्रसङ्ग्राहकवचनान्तरादेव च राहुदर्शनश्राद्धम्। अत एवाभ्युदयिकतीर्थपिण्डदाशाहिकपिण्डदानानि न निशि क्रियन्ते। निशीति सन्ध्यासायाह्नयोरप्युपलक्षणम्। "आसुरीनाम सा वेला गर्हिता सर्वकर्मसु" इत्यस्य सन्ध्यास्नाननिषेधस्य

च सङ्क्रमस्नानादौ प्रतिप्रसवः । सर्वकर्मस्वित्याह्निकान्यवैधकर्मपरत्वम् , अहरहरित्यनेन स्नानसन्ध्यातर्पण पञ्चयज्ञेषु विशेषस्मरणात् ।

अतएव सायाह्ने सन्ध्यारात्र्योः स्नानवैश्वदेवदेवपूजाऽतिथिभोजनयज्ञ-भोजनान्याचरन्ति शिष्टाः । नित्यश्राद्धमपि तदा युज्यते अन्यथा नित्यविध्यपरि-पालनात् सन्ध्यारात्र्योरित्यादि- श्राद्धनिषेधस्य तदन्यपरत्वात् । अतएव मनीषि-मूर्द्धन्यमाधवमिश्राः—प्रातर्नित्यश्राद्धमाचरन्तिस्म द्वादश्यस्पृश्यतायामपि । अतएव नित्यश्राद्धन्तदनुकल्पे मिलितदेवताकान्नत्यागे तु सुतरामनिषेध इति रहस्यम् । कम्यव्रतेषु चेति पापनाशफलकचान्द्रायणादिव्रतेष्वित्यर्थः । मांस-भक्षणादेस्सङ्क्रमे निषेधः पुण्यकालपरः ।

"चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसङ्क्रान्तिरेव च ॥"

इति वचनेन संक्रान्तौ पुण्यकालस्यैव पर्वत्वेनाभिधानात् , "शतं स्यात्सर्व-पर्वस्विति विधौ" पर्ववर्जम्ब्रजेदेनामित्यादिनिषेधे च पर्वपदस्यैकार्थतौचि-त्यात्" "तदहः पुण्यमिच्छन्ति" इत्यनेन बोधिते स्थलविशेषपुण्यकालेष्येव विधिनिषधौ बोध्यौ । संक्रान्तिपुरस्कारविहितेषु युगान्तश्राद्धदानादिषु संक्रमदिनङ्कालस्तत्र तु पार्वणादौ पञ्चमुहूर्त्ता निषिद्धाः । यात्रानिषेधादौ संक्रमाहोरात्रम्विवक्षितम् । "निरंशं दिवसं विद्धिरित्यभिधानात् । चरमत-हिनिषेधवदिति विवेकः ।

एवञ्च मांसभक्षणादौ संक्रान्तमहोरात्रम्पुण्यकालवदहोरात्रम्वा निषिद्ध-मिति प्राचा संक्रमक्षण इव निषिद्धस्तद्वर्जनञ्च तदाधारमुहूर्तवर्जनेन सर्वसुश-कम् । न हि पुण्यकाले पापकालत्वमभिहितमिति नव्यानाञ्च मतमत्र ध्येयम् ।

पुण्यकालमुपक्रम्य जाबालः—"चन्द्रसूर्यग्रहे चैव यावद्दर्शनगोचरः" ।

यावत्पदमशेषात्मकार्थकं सन्निधिस्थचक्षुष्मद्दुर्गमपरन्तेन मज्जनकाले पुण्यकालः , अर्थानाञ्च पुण्यकालः सिद्ध्यति ।

राहुदर्शनसंक्रान्तीति वाक्येऽपि न स्वीयत्वविवक्षितम्, दर्शने संक्रान्तावन्वयादेकसमासान्तर्गते विशिष्यैकत्र स्वीयत्वस्योत्सर्गिकस्य सम्बन्धानुपपत्तेर्बहूनां दर्शनञ्चावधारितं कार्यप्रयोजकम्। तेन विज्ञस्यैकस्यापि दर्शनेन योगिनाम्बहूनान्दर्शनमवधार्य्यत इति यद्येकोऽपि पश्यति तदा निराबाधं स्नानादि यदुभयोरेकस्यापि संनिधिस्थस्य दृष्टिविषय इत्यर्थः।

वस्तुतस्तु—"अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः" इत्यादिवचनैर्ग्रहणमेव निमित्तम्। अतएव राहुग्रस्ते निशाकर इत्येव संकल्पवाक्यं शिष्टानां सङ्गच्छते। निमित्तनिश्चयश्च राहुदर्शनशब्देनाभिधार्यते।

"उदिते तु यदा सूर्ये नारीणां दृश्यते रजः"। इत्यादौ निश्चयार्थको दृष्टिः। अतएव— "यस्य दृश्येत सप्ताहा" इत्यादि सङ्गच्छते।

एवञ्च दर्शनानन्तरं गुल्ममेघादिछन्नेऽपि निस्सन्दिग्धं स्नानादि। अतएव जन्मादिस्थशशिग्रहणेऽपश्यन्तः स्नानमाचरन्ति शिष्टाः, सङ्कमुक्तया तु श्राद्धं नाचरन्ति विचारानभिज्ञाः। एवञ्च निमित्तत्वेन ग्रहणस्य निमित्तनिश्चयत्वेन तद्दर्शनस्योपयोगः स्मृतियुक्त्येति तत्त्वम्।

केचित्तु—अशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः।
राहुस्पर्शात्तयोः स्नात्वा दानादौ कल्पते नच॥

इति बृह्मपुराणादपश्यतानामशौचवारणाय स्नानं भोजनानन्तरमपीति वदन्ति।

ज्योतिषे--- ग्रहकाले च नाश्नीयात् स्नात्वाऽनीयाच्च मुक्तयोः।
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा॥
स्नात्वा बृद्धोऽपरेह्यद्याद् ग्रस्तास्तमितयोर्द्वयोः॥

परेह्नीत्यप्यत्र गृहिपरं त्यक्तादिपरञ्च। अपुत्रगृहस्थं प्रत्याह---

अर्द्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत्।
सायन्तत्र न भुञ्जीत न तु प्रातरभोजनम्॥

पार्वणन्तु पुत्रवता ग्रहणोपवासनिषेधविषयेण त्याज्यमेव, अन्नादीनां प्रवेशात्। एतादृशस्थलं विहायैव राहुदर्शनश्राद्धविधिः।

परे त्वर्द्धरात्रोत्तरकर्त्तव्ये श्राद्धे प्रातःकालाशनं चतुर्थीकर्मणीव नाशौचे प्रयोजकम्। अन्नादीनां प्रवेशन्त्विति हि कर्मव्यवहितभोजनकालीनान्नाद्यशनपरं, तेन चतुर्थीकर्मणि चन्द्रग्रहश्राद्धे च सायन्तनभोजनं निषिद्धमे।

अर्द्धरात्र कर्त्तव्ये रोहिण्यष्टमीव्रतादौ तु न प्रातरशनम्, अर्द्धरात्रानन्तरकर्त्तव्यत्वाभावात्, तदुत्तरमेव दिनान्तरादिदेशस्य प्राचीननिबन्ध सिद्धत्वात्।

अतएवार्द्धकतानन्तरं दशमीवेध एकादश्यामामनन्ति दाक्षिणात्याः व्रतञ्च तदयुक्तम्। अहोरात्रावच्छिन्नानशनरूपोपवासे हि तदवच्छिन्नदशमीवेध एव निषिद्ध इत्यन्यदेतत्। किञ्च रोहिण्यष्टमीव्रतेऽङ्गमुपोषणमिति न प्रातर्भोजनमिति दृष्ट्वेति दर्शनं कामनापेक्षयुक्तम्।

> युक्तन्दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः।
> सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः॥
> धौतपाप्मो विशुद्धात्मा मोदते तत्र देववत्॥

इति शातातपवचनात्। कामनाविरहे पुत्रवद्गृहिणां ग्रस्तास्तसूर्येऽशक्तानाञ्च ग्रस्तास्तचन्द्रे च "स्नात्वाऽश्नीयाच्च मुक्तयो" रित्येवं व्यवस्था। "मुक्तयोश्च कृतस्नानः पश्चात् कुर्यात्स्ववेश्मनि" इति ब्रह्मपुराणे भोजनविधानात्।

पठन्ति च--सूतके मृतके चैव न दोषो राहुदर्शने।
तावदेव भवेच्छुद्धिभुक्तिर्यावन्न दृश्यते॥

इति। स्नानपूजातर्पणदानान्यभिधाय तदुक्तमिति तद्भिन्ने श्राद्धादौ सूतकं बाधकमेव।

तथा--मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते।
आकलय्य तु तत्कालं भुञ्जीताथाविशङ्कितः॥

ज्योतिषे---जन्मसप्ताष्टरिष्फाङ्कदशमस्थे निशाकरे ।
दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च ॥

रिष्फः—द्वादशराशिः । अङ्कः - नवमराशिः । निधने-जन्मनक्षत्रापेक्ष-सप्तमनक्षत्रे ।

तथा-- चतुर्थे नवमे चैव न कुर्याद्राहुदर्शनम् ।
स्नात्वा ऋतुशतं पुण्यं दृष्ट्वा गोदानजं फलम् ॥

इति देवीपुराणे दर्शनविधेर्नोपरक्तं न वारिस्थं कथमिति निषेधोपीदृशस्थल एवेति प्रतिभाति । दैवादीदृशस्थलीयराहुदर्शने तु प्रायश्चित्तं वर्षकृत्ये द्रष्टव्यम् । अथ बहुफलत्वाद् बहुभिरज्ञातत्वाच्च कार्त्तवीर्य्यदीपदानविशिष्यं लिख्यते--

स्मृतिः--गोमयेनोपलिप्याथ शुद्धभूमौ समाहितः ।
तन्मध्ये मण्डलं कार्यं त्रिकोणं विन्दुसयुतम् ॥
चन्दनैः कुङ्कुमालक्तै रक्तचन्दनसंयुतः ।
तस्योपरि न्यसेद्दीपं घृतपूरितवर्त्तिकम् ॥
तन्दीपं विधिना पूज्यं पश्चात् सङ्कल्पयेत्ततः ।
कार्त्तवीर्य्य महाबाहो भक्तानामभयप्रद ॥
दीपं गृहाण मद्दत्तं कल्याणङ्कुरु सर्वदा ।
अनेन दीपदानेन कार्त्तवीर्य्यः प्रसीदताम् ॥

इति संकल्प्य-- निश्चलन्तु प्रदीपं वै कार्त्तवीर्यार्थमादरात् ।
अभिचारे त्रयं कुर्याद् दक्षिणोत्तरपश्चिमे ॥
नष्टलाभाय कुर्वीत पञ्चसप्त तथा नव ।
वश्याभिकांक्षी कुर्वीत शतं दीपांश्च नीतवत् ॥
श्रावणे दशसाहस्रं त्रिशत्साहस्रमेव वा ।
लक्षं वापि हि कुर्वीत गुर्वाज्ञां प्राप्यसाधकः ॥
चतुर्वर्गफलप्राप्तौ कुर्वीत प्रतिवासरम् ।
अनेन दीपदानेन कार्त्तवीर्यः प्रसीदतु ॥
एवन्दत्वा तु नामानि कुर्वीत गुरुशासनात् ।
कार्त्तवीर्यश्चौरद्वेषी कृतवीर्यसुतो बली ॥

सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्द्धरः ।
रक्तगन्धो रक्तमाल्यो राजा माथुरराष्ट्रजः ॥
द्वादशैतानि नामानि कार्त्तवीर्यस्य यः पठेत् ।
नष्टम्वाऽपहृतम्वाऽपि लभते नात्र संशयः ॥"

तृं आं दृं आं ह्रीं वषट् कार्त्तवीर्यार्जुनाय माहिष्मतीनाशय सहस्रवाहवे सहस्रत्रयहदीक्षिताय दत्तात्रेयपुत्रायात्रेयाय अनुसूयागर्भरत्नाय ह्रां क्रां इमन्दीपङ्गृहाण अमुकं रक्ष रक्ष दुष्टं नाशय नाशय पातय पातय घातय घातय शत्रन् जहि जहि ह्रीं हूं क्रौं क्लीं इं स्वाहा। अनेन मन्त्रेण दीपाद्येन पश्चिमाभिमुखेन मां रक्ष देवदत्तवरदानाय हां हूं क्रां श्रीं स्वाहा, तँ थँ दँ धँ नँ पँ फँ बँ भँ मँ तृं स्वाहा। प्रत्यङ्मुख इदं साष्टशतं वा जपेत्।

बौधायनः—आज्यार्थे गव्यघृतम्, तदभावे माहिषम्, तदभावे तिलतैलम्, तदभावे जर्त्तिलस्य तदभावे कुसुम्भस्य सर्षपस्य तदभावे पयोदधि तदभावे तण्डुलपिष्टानि यवपिष्टानि वा, सहस्रम् आं त्रां श्रीं स्वाहा। क्रीं तृं एकादश सहस्रं वा जपः कर्त्तव्यः। मन्त्रास्तज्जपसङ्ख्याश्च वैकल्पिकाः।

अथ मैथिलाः शिथिलादरतया लिखनविमुखाः पुरुषार्थमूलभूते रामनवमीव्रते इत्यनभिज्ञविज्ञानाय दयापरैरस्माभिस्तद्विलिख्यतेऽगस्त्यसंहितायाम्—

"चैत्रे नवम्यां प्राक्पक्षे दिवापुण्ये पुनर्वसौ ।
आविरासीत्सकलया कौशल्यायां परः पुमान् ॥
उदये गुरुगौरांशे स्वोच्चस्थे ग्रहपञ्चके ।
मेषे पूषणि सम्प्राप्ते लग्ने कर्कटकाह्वये ॥
तस्मिन्दिने तु कर्त्तव्यमुपवासव्रतं सदा ।
तत्र जागरणं कुर्याद् रघुनाथपरो भुवि ॥
प्रातर्दशम्यां कृत्वा च सन्ध्याद्याः कालिकाः क्रियाः ।
सम्पूज्य विधिवद्रामम्भक्त्या वित्तानुसारतः ॥
ब्राह्मणान्भोजयेद्भक्त्या दक्षिणाभिश्च तोषयेत् ।
गोभूहिरण्यरत्नाद्यै-र्वस्त्रालङ्करणै-स्तथा ॥

रामभक्तान् प्रयत्नेन पूजयेत्परया मुदा ।
एवं यः कुरुते भक्त्या श्रीरामनवमी व्रतम् ॥
अनेकजन्मसिद्धानि पापानि सुबहून्यपि ।
भस्मीकृत्य व्रजन्त्येव तद्विष्णोः परमम्पदम् ॥
सर्वेषामप्ययं धर्मो भक्तिमुक्त्यैकसाधकः ।
पूज्यः स्यात्सर्वभूतानां यथा रामस्तथैव सः ॥
यस्तु रामनवम्यां वै भुङ्क्ते स च नराधमः ।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ॥
अकृत्वा रामनवमी - व्रतं सर्वव्रतोत्तमम् ।
व्रतान्यन्यानि कुरुते न तेषां फलभाग्भवेत् ॥
रहसि कृतपापानि प्रख्यातानि बहून्यपि ।
महान्ति च प्रणश्यन्ति श्रीरामनवमीव्रतात् ॥
एकामपि नरो भक्त्या श्रीरामनवमीं मुने ।
उपोष्य कृतकृत्यः स्यात्सर्वपापैः प्रमुच्यते ॥"

प्राक्पक्षे—शुक्लपक्षे । गुरुगौरांशे गुरुसहिते गुरुनवांशे । भुवीति पर्यङ्कादिनिवृत्तिः । अत्र सदेति श्रवणादकरणे निन्दाश्रवणाच्च नित्यमिदं व्रतम् । अत्राधिकारो राममन्त्रदीक्षावतामेवेति सर्वैराचरणीयमिदमिति केचित्तन्न, "सर्वेषामप्ययं धर्म" इति बिरोधात् । सदाश्रवणादेवञ्च आजीवमिदं व्रतम् । एकवर्षं समाप्यमप्यपरम्व्रतमेकामपीत्यभिधानात् । दशम्यामित्यभिधानाद् ब्राह्मणभोजनादिकं नवमीमतिक्रम्य कार्यम् । तदनन्तरङ्कर्त्तव्यं पारणं ह्यर्थाद्दशम्यामेव, "तिथिभान्ते च पारणमिति" वचनाच्च ।

यत्तु पारणन्नवम्यामित्यचोदि, नवमीमध्यपारणनिषेध उपवासाकरणनिन्दैवावगम्यते । अकृतेऽपि तस्मिन् जन्मनि करणमात्रं विधीयते । अन्यथाब्रह्मचर्यं व्रतादीनां प्रथममेव कारणाद् रामनवमीव्रतपूर्वकृतत्वबोधनासङ्गतिप्रसङ्गात् । उपवासश्चात्र प्रधानम्, उपवासव्रतमित्युपक्रमे "उपोष्य सर्वपापैः प्रमुच्यते" इत्युपसंहारेऽभिधानात् । तत्र व्रते अङ्गजागरणं कुर्यात् । दशम्यां

सम्पूज्य भोजयदित्येवं तयोरङ्गत्वं हि विहितम् । कृत्वा चेति चकारेण नवमीदिने पूजाङ्गम्भूत्वा समुच्चीयत इति प्रतिभाति ।

इति महामहोपाध्याय - वामदेवकृतौ

चातुर्मास्यऋतुमासपक्षतिथिवारनक्षत्राहोरात्रकृत्यानि समाप्तानि ।

## अथ ब्राह्ममूहूर्त्तोपक्रमादहोरात्रकृत्याचारो निरुप्यते

मनुः—"ब्राह्मे मुहूर्त्ते बुध्येत धर्माथौं चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥

स च ब्राह्मो रात्रेश्चतुर्द्दशो मुहूर्त्तः । बुध्येतेति निद्राकाले ब्राह्ममुहूर्तौ बोधचिन्तयाकृतिसाधर्म्योऽहोरात्रकर्त्तव्यतयोपदिष्टो यज्ञादिश्च काम्यः । अर्थोपमं तन्मूलान् तत्प्रयोजकान् तच्छब्देन धर्मार्थपरामर्शः । वेदस्य तत्त्वार्थीशिष्यतात्पर्यविषयो ब्रह्मशयनादुत्थितौ । यत्तु चिन्तयेन्मधुसूदनादिति विष्णूवचनात् । तथाचोक्तम्—

"प्रातःस्मरामि भवभीतिमहार्त्तिशान्त्यै नारायणङ्गरुडवाहनमञ्जनाभम् ।
ग्राहाभिभूतवरवारणमुक्तिहेतु - चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥
प्रातर्भजामि मनसा वचसा च मूर्ध्ना पादारविन्दयुगलं परमस्य पुंसः ।
नारायणस्य नरकार्णवतारणस्य पारायणप्रवरविप्रपरायणस्य ॥
प्रातर्भजामि भजतामभयङ्करन्तं प्राक्सर्वजन्मकृतपापभयापनुत्यै ।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोरशोकप्रणाशन - कोद्यतचक्रपाणिः ॥

श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेत्तु यः ।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥"

कल्यमुत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।

भारते—"प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहितः ॥"

तथा—"महर्षिर्भगवान् व्यासः कृत्वेमां संहितां पुरा ।
श्लोकैश्चतुर्भिर्धर्मात्मा पुत्रमध्यापयच्छुकम् ॥

हर्षस्थानसहस्राणि शोकस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ।
ऊर्ध्वबाहू विरौम्येष नच कश्चिच्छृणोति मे ॥
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ।
न जातु कामान्न भयान्न लोभाद्धर्मञ्जह्याज्जीवितस्यापि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्याप्यनित्यः ॥
इमाम्भारतसावित्रीं प्रातरुत्थाय यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥"
प्रथमनित्यपदम् - स्वर्गादिफलनियतत्वार्थकम् ।

स्मृतिः—"वाराणस्यान्दक्षिणे भागे कुक्कुटोनाम ब्राह्मणः ।
तस्य स्मरणमात्रेण दुःस्वप्नः सुस्वप्नो भवेत् ॥
यः पठेत्प्रातरुत्थाय दुर्गा दुर्गाऽक्षरद्वयम् ।
आपदस्तस्य नश्यन्ति तमः सूर्योदये यथा ॥"

अक्षरेति - पदपरम् । न क्षतिर्निष्फलं भवतीत्यर्थकं वा । पदं दुर्गा-वाचकं दुर्गातनक्षरद्वयोरपीत्यर्थः ।

तथा—"अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बिभत्सुर्विजयः पार्थस्सव्यसाची धनञ्जयः ॥
एतान्यर्जुननामानि प्रातरुत्थाय यः पठेत् ।
उदितेष्वपि शस्त्रेषु हन्ता तस्य न विद्यते ॥"

तथा—"अर्थकामः स्मरेन्नित्यं कुन्ती पुत्रं युधिष्ठिरम् ।
अहल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा ।
पञ्चकन्या स्मरेन्नित्यं सौभाग्यं तस्य बर्द्धते ॥
हरं हरिं हरिश्चन्द्रं हनुमन्तं हुताशनम् ।
हकारादीन् स्मरेन्नित्यं हानिस्तस्य न जायते ॥"

ब्राह्ममुहूर्त्ते मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ( सप्तम्यर्थे द्वितीया ) मूत्राद्विरोधाभावेन कुर्याद्, अतः यदि वेगी स्यादिति नारदः ।

विष्णुपुराणे—"ततः कल्यं समुत्थाय कुर्यान्मैत्रं नरेश्वर ।
नैर्ऋत्यामिषु - विक्षेपमतीत्याभ्यधिकं भुवः ॥"

इषुविक्षेपप्राप्यदेशमतीत्य भुवोऽधिकदेशमभिलक्षीकृत्य मूत्रपुरीषे त्यजेदित्यर्थः । भुवीत्यन्तेनाकाशादिव्यवच्छेदः ।

यमः--"कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रञ्च गृही कुर्याद्यद्वा कर्णे समाहितम् ॥"

कात्यायनः – "यद्येकवासाः कर्णे यज्ञोपवीतं धृत्वा" । वस्त्रद्वयपक्षे बौधायनः - प्रावृत्योच्चरेदेव संवीताङ्गोऽवगुण्ठितः।" मनुः-"नियम्य प्रयतो वाचं संवीतांगोवगुण्ठितः ।" संवीतं निवीतमङ्गं यस्य अवगुण्ठितः उत्तरीयावृत्तशिराः ।

देवलः---"सदैवोदङ्मुखः प्रातस्सायाह्ने दक्षिणामुखः ।
प्रत्यङ्मुखस्तु पूर्वाह्णे मध्याह्ने चाप्युदङ्मुखः ॥"
प्राङ्मुखश्चापराह्णे निशायां दक्षिणामुखः ।
विण्मूत्रं विसृजेन्नित्यं सन्ध्यासु परिवर्जयेत् ॥"

वर्जनम् - वेगधारणम्भवेत् ।

मनुः--"मूत्रोच्चारसमुत्सर्गन्दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥"

इति प्रातर्मध्याह्नपरम् । सन्ध्यानिषेधात्सति सम्भवे ब्राह्ममुहूर्त एव प्रातःकालीनमूत्रपुरीषोत्सर्जनम् ।

मनुः—"मैत्रप्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
पूर्वाह्ण एव कुर्यात्त देवतानां प्रपूजनम् ॥"

अह्नः पूर्वो भागः पूर्वाह्णः । ब्राह्ममुहूर्त्तमारभ्य प्रहरद्वयसमाप्तिपर्यन्तः मैत्रस्नानपूजनेषु दिवा सति सम्भवे नियमः । ब्राह्ममुहूर्त्तस्यापि पूर्वाह्णपदार्थत्वात् , दिवसस्याद्यभागेत्विति श्रीदत्तवाक्ये दिवसार्द्धभागशब्दा-

र्थत्ववत् शेषेषु त्रिषु बाधकानपोद्यो नियमः। दन्तधावनस्य उषःकाल-कर्त्तव्यस्य ग्रहणाद्, भोजनोत्तरदन्तधावने तदाचमनपूर्वकृत्यत्वमेव। मध्याह्न-स्नाननित्यपूजे दिनचतुर्थभागे एव सम्मतः।

## अथ शौचम्

ब्रह्माण्डे—"निर्णिक्ते तु मृदन्दद्यात् मृदन्ते त्वप एव हि।
उद्धृतोदकमादाय मृत्तिकांश्चैव वाग्यतः॥
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः॥"

ह्यनिर्णिक्ते लोष्ट्रकाष्ठादिना परिमृज्य शुद्धजलक्षालिते शिश्ने पादौ च।

याज्ञवल्क्यः—"गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितम्॥"

उत्थायेति निःशेषमूत्रपातार्थमशक्तानां, समर्थानान्तु निःशेषपातान्नोत्थानम्। इदन्तु जलपरमत्र सङ्ख्यायाश्च स्मरणात्। अत्रैव—

देवलः—"यावता मन्यते शुद्धिस्तावच्छौचं विधीयते।
प्रमाणं द्रव्यसंख्या वा न शिष्टैरुपदृश्यते॥"

मृत्तिकामभिप्रेत्य—

मनुः—"एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता॥
तिस्रस्तु मृत्तिका देया कृत्वा नखविशोधनम्॥"

दक्षः - न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता।"

हारितः -"दश मध्ये षट्पृष्ठतः एकत्र वामे मध्ये करतले"। अत्र पाठक्रमाद्दशानन्तरं षट् उभयोरामणिबन्धं सप्त। तृतीयहस्तानयमात्रस्य मृत्तिकाषट्कग्रहणेऽपि सत्वात् तिस्र इत्यत्रोभयोरित्यनुषज्यते।

एतदनन्तरं शङ्खः - "तिस्रस्तु पादयोर्देयाः शुद्धिकामस्य नित्यशः" तिस्र इत्येकैकपादे । तिस्रस्तिस्रः प्रदातव्याः पादयोः पृथगिति नारदीयात् । केवलमूत्रोत्सर्गे

दक्षः - "एका लिङ्गे तु सव्ये त्रिरुभयोर्मृद्द्वयं स्मृतम् ।"

ब्राह्मे - "पादयोर्द्वे गृहीत्वा च स्वप्रक्षालितपाणिमान् ।
द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ॥"

द्विराचमेत्यभिधानात्सकृदाचमनोत्तरं वा विष्णुस्मरणम् ।

शङ्खः - "आचम्येशानं मनसा ध्यायेत् ।" अत्रेशानपदं - योगान्मत्वर्थीयाच् प्रत्ययाद्वा विष्णुपरम् ।

न च विष्लृव्याप्ताविति धात्वनुसारि योगाद्विष्णुपदं शिवपरम् । रूढेर्बलवत्तया स्मरणयोस्समुच्चयो वास्त्विति वाच्यम् , आचारविरोधात् । सङ्ख्यामभिधाय –

मनुः— "एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणंन्तु वनस्थानां यतीनान्तु चतुर्गुणम् ॥"

दक्षः— "लिङ्गेप्यत्र समाख्याता त्रिपर्वी पूर्य्यते यया ।"
त्रिपर्वी तर्जनीमध्यमाऽऽनामिकाग्रपर्वद्वयमित्याह ।
अर्द्धप्रसृतिमात्री तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्द्धं परिकीर्त्तिता ॥"

अन्यत्र तु शङ्खः—"मृत्तिका तु समाख्याता त्रिपर्वी पूर्यते यया ।"

परिशिष्टटीकायां—"अर्द्धामलकमानेन कुर्याद्धोमहविर्बलीन् ।
प्राजाहुतिञ्चैव मृदं तथा गात्रविशोधनम् ॥"

मनुः— "यद्दिवा विहितं शौचं निश्यर्द्धंन्तु तदिष्यते ।
तदर्द्धमातुरेणातस्ततस्तस्यार्द्धमध्वनि ॥"

आतुरस्य· आपद्भिन्नस्य । अपटुमभिप्रेत्याह –

आपस्तम्बः – आतुरः कुर्याद्यथाबलः, विलम्बप्रयोजिकायाः सङ्ख्याया वृद्धिह्रासोच्चादौ विधातुमुचितः । सङ्ख्यापरिमाणोभयह्रासपरं वचनमिति ज्यायः । तच्चिन्त्यम् । शब्दस्वारस्येनादृष्टार्थतौचित्यात् । अन्यथा स्वर्गकाम इत्यादौ स्वर्गपदेनैहिकमुच्येत ।

मनुः— दुःखें त्यादेरुत्कृष्टपरत्वञ्च कल्प्यतेति ।

बौधायनः – मूत्रचतसृसमुत्सर्गे ।

शातातपः—"मूत्रपुरीषवद्" । अत्यन्तलेपे पुरीषोत्सर्गवदशौचमित्यर्थः । स्त्रीशूद्रानुपनीतानां तु यावता मन्यत इति देवलवाक्यान्मृत्तिकायां सङ्ख्यापरिमाणयोर्नियमः । किन्तु गन्धलेपक्षयमात्रे ब्रह्मचारित्वादिनोत्कर्षस्यैवाविद्यत्वेनाशौचापकर्षस्यौचित्यात् । आचमनवदित्यर्थः । अन्यथा वचनमाह

याज्ञवल्क्यः – 'हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः ।
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥"

द्विजातय उपनीताः । चकारमुपनीतस्य वर्णसङ्करस्य समुच्चयार्थः । "अन्तर्भागेन चात्मनः" तदाहाचमेदित्यनुवृत्तौ –

मनुः – "शुद्धश्चैव सकृत्सकृत्" । नानुपेक्षस्योष्ठस्य वहिरङ्गत्वात्सकृत्त्वाच्च शूद्राचमनेऽपकर्षः । वस्तुतस्तु - ओष्ठतालुस्पर्शमात्रेण कण्ठगामित्वाभावादाचामेदित्यस्य वैश्यशूद्रयोर्नान्वयः । सकृत्वमेव हि वहिरङ्गत्वञ्च वैश्याचमनापेक्षया शूद्राचमनेऽपकर्षो नतु भक्षणाभावः, तस्य वैश्यसाधारणत्वादिति मिताक्षरानुसारिणीसरणिः समीचीना ।

अतएव ब्राह्मे- "स्त्रीशूद्रो वाऽपि नित्याम्भः क्षालनाच्च करोष्ठयो " रिति । स्त्रीपदमनुपनीतत्रैवर्णिकार्थकम् । द्विजातिभिन्नत्वेनाचमनापकर्षविधानौचित्यात् । मिताक्षरास्वरसोऽप्येवम् । द्विराचमनस्येत्यत्र द्वितीयाचमनमोष्ठजलस्पर्शम् । द्विजातीनामपि प्रत्युपस्पृश्याम्भः शुचिरिति गोभिला-

दिति प्राञ्चः। तच्चिन्त्यम्, गोभिलस्य शब्दपरत्वात्। अन्तरङ्गस्यावयवार्थकत्वाद्वा। अन्यथा बहुसङ्कोचापत्तेः। इन्द्रियस्पर्शादिकमन्यत्र प्रपञ्चितम्, विस्तरान्नेह प्रस्तूयते।

मार्कण्डेये-- "कुर्यादाचमनस्पर्शं गोपृष्ठस्यार्क्कदर्शनम्।
कुर्वीतालम्भनं वाऽपि दक्षिणश्रवणस्य च॥
यथाविभवतो ह्येतत् पूर्वाभावे परः परः॥"

गोपृष्ठस्य भूतलस्य, दक्षिणकर्णस्यासौ विकल्पो विप्रस्यैव। "विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः" इति पराशरवचनात्।

"क्षुते निष्ठीविते स्वप्ने परिधानेऽश्रुपातने।
कर्मस्वेतेषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्॥"

शातातपः-- "वातकर्मणि निष्ठीवे दन्तश्लिष्टे तथाऽनृते" निष्ठीविते मुखेन कठिनश्लेष्मत्यागकृते, निष्ठीवे नासानिस्मृते कठिनश्लेष्मणि। कर्मस्थस्य क्षुतादौ पराशरः-

'क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथाऽनृते।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥"

एषु निमित्तेषु समर्थोऽपि कर्मस्थो नाचामेत्, किन्तु दक्षिणकर्णमेव स्पृशेत्। विप्राऽन्यस्तु गोपृष्ठस्पर्शादिकमनुकल्पान्तरमाचरेदित्यर्थः। यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यान्तरः शुचिरिति वचनाद्विष्णुस्मरणमाचमनानुकल्पत्वेनाचरन्ति। दन्तधावने---

विष्णुः— "कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम्।
प्रातर्भुक्त्वाचमेद्वाऽपि भक्षयेद्दन्तधावनम्॥"

सकुर्चं चूर्णिताग्रम्। भारते—तर्जन्यग्रसमस्थूलं षड्गुलम्। तर्जन्यग्रेति स्त्रीशूद्रपरं, षड्गुलमिति शूद्रपरम्। अष्टांगुलमित्युपक्रम्य छन्दोगपरिशिष्टे— "प्रतिचर्व्यं च मन्त्रेण भक्षयेद्दन्तधावनम्" इति।

मन्त्रमाह—"आयुर्बलं यशो वर्च्चः प्रजापशुवसूनि च ।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि वनस्पते ॥"

नारसिंहे—"प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत् ॥"

स्मृति मञ्जूषायां—"द्वादशाङ्गुलन्तु विप्राणां क्षत्रियाणां नवाङ्गुलम् ।
चतुरङ्गुलमानेन नारीणां विधिरुच्यते ॥
अन्तरप्रभवानाञ्च षडङ्गुलमुदाहृतम् ॥"

अन्तरप्रभवाः— वर्णसङ्कराः ।

नारसिंहे— "अलाभे दन्तकाष्ठानां प्रतिषिद्धे तथादिने ।
अपां द्व ग ड्रूषैर्मु ख—शुद्धिर्विधीयते ॥"

दन्तकाष्ठनिषेधे तृणपत्रादिना दन्तमलापकर्षणङ्कार्यमेव । तत्परमेव-वचनम् । "उपवासे न दुष्यन्ति दन्तधावनमञ्जनमिति । उपवसतां नांगुलीभिरिति निषेधेऽपि पत्रकाष्ठमृदाद्यन्तरिताङ्गुलीकरणकं दन्तघर्षणमविरुद्धम् । भक्षयेदिति गौणप्रयोगः । तद्धर्माणामाद्यन्ताचमनोपवासविरोधित्वश्राद्धदिनाहर्भोजनदोषवारयमानां प्राप्त्यर्थः । अत्र च केवलविहितालाभेऽविहितनिषिद्धम् । तदप्राप्तावविहितानिषिद्धम् । तस्याप्यलाभे काष्ठैर्दन्तधावनं न कार्यमपि तु तृणपत्रादिना गण्डूषैश्चेति दिक् ।

विष्णुपुराणे— "सर्वमर्हति पूतात्मा प्रातस्नायी जपादिकम् ।
स्नातोऽधिकारी भवति दैवे पित्रे च कर्मणि ॥
पवित्राणां तथा जप्ये दाने च विधिदेशिते ॥"

शङ्खः—"नित्यं नैमित्तिकङ्काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढास्नानं प्रकीर्त्तितम् ॥
अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानन्तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥

चाण्डालशवपूजादिस्पृष्ट्वाऽस्नातां रजस्वलाम् ।
स्नानार्हन्तु यत्स्नाति स्नानं नैमित्तिकं हि तत् ॥
पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥
वप्तुकामः पवित्राणि अर्चिष्यन् पितृदेवताः ।
स्नानं समाचरेद्यस्तु क्रियाङ्गन्तत्प्रकीर्त्तितम् ॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणार्था हि प्रवृत्तिस्तस्य नान्यथा ॥
सरस्सु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानन्तत्र क्रिया मता ॥"

मध्याह्नपूर्वकृत्ये गायत्रीजपाग्निहोत्रप्रातःसन्ध्यातर्पणसमित्पुष्पकुश-मृदाहरणवेदाभ्यासादिष्वाह्निकेषु प्रातस्नानमङ्गम् । तद्भिन्नेष्वाह्निकेषु काम्येषु नित्येषु दानयज्ञादिषु श्राद्धदशाहिकपिण्डतर्पणादिषु च मध्याह्न-स्नानमङ्गम् , वप्तुकाम इत्यादिवचनात् । श्राद्धे मध्याह्नस्नानमुक्तवच-नात् । "प्रातःस्नातस्सहाम्बरः" इति वचनात्तदप्यङ्ग इति विवेकः ।

चाण्डालेन शवेन वाङ्गस्पर्शस्योपग्रहः । अस्नातेनाभिजप्येन सौरकालीन-प्रातःस्नानं स्थले जले वा नित्यभोजनाङ्गत्वाच्च नित्याङ्गमपि सन्ध्यास्नान-मेव । काम्यं - लौकिकपुष्ट्यादिकामकर्त्तव्यम् । क्रिया-पारलौकिकाभीष्ट-हेतु पुण्यकारि ।

"तत्र काम्यन्तु कर्त्तव्यं यथावद्विधिचोदितम् ।
नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम् ॥
तीर्थाभावेऽपि कर्त्तव्यमुष्णोदक - परोदकैः ।
स्नातस्य वह्नितप्तेन तथैव परवारिणा ॥
शरीरशुद्धिर्विज्ञेया नतु स्नानफलं लभेत् ॥"

काम्यम् - पुष्यस्नानादि । तीर्थस्नानञ्च यथावत् । शीतलजलं प्रविश्य परकारितजलाशये पञ्चपिण्डानुद्धृत्य मन्त्रतर्पणकुशतिलपुष्पादिसहितं ग्रहशान्त्यादिसद्यःफलजनके सर्वौमुख्यादिस्नाने नित्यादिचतुष्टये च स्नाने उद्धृतजलेन क्रियमाणे मन्त्रतर्पणादिकं नास्थिरपूर्वाजनके कर्मणि । तत्स्थानोपयोगिनोऽङ्गता हि दक्षसूत्रनयनिषिद्धा । अतएव

दक्षः—मलापकर्षणन्तीरे मन्त्रवत्तज्जले स्मृतम् ।

तथा—सन्ध्यास्नानमुभाभ्यान्तु स्नानदेशाः प्रकीर्तिताः ।
मन्त्रवज्जल एवेति नियमादुद्धृतोदके ॥"

स्नानमन्त्रो नास्ति स्त्रीशूद्रयोश्च पौराणिको मन्त्रः "ओङ्कारहीन" इत्युक्तम् । प्रकीर्णके परवारिणि निषेधबलात् शौचस्नानङ्कार्यम्, क्रियास्नानं निषिद्धं पिण्डोद्धारं विना न कार्यम् । तर्पणन्तु स्नानादुद्धृतजलेन क्रियेतेति निषिद्धमिव मार्जनादिकमपि उभाभ्यान्तीरजलाभ्यामधिकरणाभ्यान्तीरपदं जलशून्यदेशपरम् । मलापकर्षणमामलकादिस्नानञ्च । नित्यनैमित्तिके वाऽस्योपलक्ष्येण उपरागस्नानमपि नैमित्तिकमेव । काम्यक्रियास्नाने तु मन्त्रशून्ये भवत एव काम्यस्य सर्वाङ्गोपेतस्य फलहेतुसरसि स्नायादिति वचनात् । अशौचकालीनस्नानमपि भोजनाङ्गमेव । एवञ्च पुष्यस्नानेऽदृष्टद्वारा पुष्टिफलके तु दक्षसूत्राधिकरणविरोधात्तर्पणे भावमभिदधानो वाचस्पतिमिश्रा - श्चास्माकं मनो न रोचते । कातीयकल्पेन तु न प्रातस्नानम् , अथातो नित्यस्नानमिति कात्यायनेन दिनतृतीयभागानन्तरमेव स्नानविधानात् ।

नच—"यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान्प्रक्षाल्य नद्यादौ गेहे चेत्तदनन्तरम् ॥"

इति वचनेन येन प्रकारेण चाहनि तेन प्रातरिति बोधितमिति नैवमिति वाच्यम् । सादृश्यार्थो हि यथा-त था शब्दार्थः । तच्चोपात्तनित्यत्वमात्रम् । यथेष्टस्नानविधिरिति शेषे द्विःपाठाद्यत्र यत्रस्नानन्तत्रैव विधिरित्यभिधानात् ।

प्रातरप्येवं स्नानमिति चेद् भ्रान्तोसि आर्षं शेषे द्वि पाठ्यमिति शिक्षया हि सहस्रनामदेवीमाहात्म्यादिष्वेव द्विरत्र पाठो नतु सूत्रमेव द्विपाठगर्भम् । न च सप्तशतीश्लोक पूर्णाय श्लोकश्चरम एव हि वा माहात्म्यघटक इति वाच्यम्, श्लोकान्तरे हि पाठे न पूर्णाकरणात्, सप्तशतीश्लोकानां माहात्म्यमिति गणनया सिद्धश्च । अतएव जपः जप्तव्यत्वेन सूर्योदयं विना अकर्त्तव्यः स्नानसन्ध्यातर्पणप्रयोगशेषे कात्यायनेनोक्ताः । अतएवोर्ध्ववाहुः सूर्यं समीक्षन्निति वक्ष्यति ।

प्रातस्नानञ्चारुणोदये-अरुणकरग्रस्तमिति विष्णुना, सन्ध्यायामुदिते रवाविति दक्षेण, यथाऽह्नि तथा प्रातरिति भेदगर्भशादृश्यकायकेन कात्यायनेन, प्रातस्सन्ध्यां सनक्षत्रामिति सम्बर्त्तेनबोधनात्, न सन्ध्ययोरिति निषेधस्त्वन्यपरः ।

"उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैस्तु गृहाश्रितैः ।
तिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विभिः ॥

इति वचनात । तपस्विनो ब्रह्मचारिवाणप्रस्थयतयः । उदिते रवाविति दक्षोक्तिः शिशिरसन्ध्यास्नानपरा, गौणकालपरा वेत्यभिहितम् । प्रकीर्णके—

मनुः – "नैनं ग्रामेऽभिनिम्लो चेत्सूर्यो नाभ्युदियात्क्वचित् ।"

एवञ्च ब्रह्मचारिणमभिनिम्लो चेदस्तङ्गच्छेत्तञ्चेत्कामतो निद्राणं सूर्योभ्युदयादपीत्यर्थः । तथा च ग्रामाद्बहिर्जलाशयं सूर्योदयात्प्रागेव स्नानाद्यर्थं सूर्ये अनस्त एव च सायं स्नानाद्यर्थम्ब्रह्मचारी गच्छेदिति तात्पर्यम् । वाणप्रस्थसन्यासिनावप्येवं न्यायसाम्यात् । अत्र काम्यक्रियास्नाने कुशाभ्यङ्गे विकले निःफले, अन्यानि चत्वारि सर्वशक्तिनयात् विकलान्यपि चादिष्वपि कार्य्याणीति मन्तव्यम् ।

जावालः— "अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वाऽपि दैहिकं मार्जनं विदुः ॥"

दैहिकम्— संकलदेहव्यापकमार्जनं । स्नानकार्याकरम्बिदुः ।

आपस्तम्बः— अशिरोवर्ज्जनमपरं वर्ज्जयेदस्तमिते च स्नानं जलं प्रवि-श्य, अशिरस्कस्नानमस्तसूर्ये चाशिरःस्नानं न कुर्यादित्यर्थः । अनुदितहोमी तूद्धृतजलेन स्नात्वा रात्रिषोडशांशेन जुहूयात् । "प्रातर्न्न तनुयात्स्नानं होमलोपाविगर्हित" इति वचनात् । इदमपि कौथुमादिकल्पेन प्रातःस्नाने-बाधकं प्रातस्सन्ध्यालोपविहरणापत्तेरित्याभाति । ब्राह्ममुहूर्त्त एवानुदितहो-मिनां स्नानमिति तु मिश्राणां दुराग्रहः । षोडशांशे अमन्त्रकस्नानसन्ध्या-होमसम्भवात् । वैधस्नानस्य "आचान्तमनुगर्त्तेवा निशि स्नानं न विद्यत" इति निषेधेन जलाशये मिश्रैरप्यनभ्युपेतत्वात् ।

याज्ञवल्क्यः – "असामर्थ्याच्छरीरस्य कालशक्तिव्यपेक्षया ।
मन्त्रस्नानादयः पञ्च एक इच्छन्ति सूरयः ॥"

अत्र सन्ध्याविहितत्वं नित्यस्य लक्षणम् । प्रातःस्नानजपादि सायं स्नान-साधारणम् । अथातो नित्यस्नानमिति कातीयवचनन्त्वावश्यकपरम् । तिस-ष्वपि च सन्ध्यासु इति मध्याह्नसाधारणम् । सन्ध्यात्वमिह न प्रविष्टमपि तु—

"प्रातः भौमं तथाग्नेयं वायव्यम्दिव्यमेव च ।
वारुणं मानसञ्चैव सप्तस्नानं प्रकीर्त्तितम् ॥
आपोहिष्ठेति वै मन्त्रं मृदालम्भस्तु पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजःस्मृतम् ॥
यत्तु नातपवर्षाद्भिः स्नानं तद्दिव्यमुच्यते ।
वारुणञ्चावगाह्यञ्च मानसं विष्णुचिन्तनम् ॥
शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानक्रमेण तु ।
कालाद्देशादसामर्थ्यात्सर्वं तुल्यफलं स्मृतम् ॥"

अत्र वारुणं मुख्यम् ,तदसामर्थ्यात्कालदेशादिनिबन्धनात् । काम्यं क्रिया-स्नामञ्च विहायान्येषु चतुर्थस्नानेषु मन्त्रादयः । यद्यपि प्रतिनिधयः पाठक्रमेण

भवन्ति । तत्रापोहिष्ठेति त्र्यृचकरणकमेकमेव मार्ज्जमित्याद्यः कल्पः छन्दोगानां माध्यन्दिनीयानाञ्च । कठशाखिनान्तु---

शन्न आपस्तु द्रुपदादिव आपोहिष्ठाऽघमर्षणम् ।
एभिश्चतुर्भिर्मन्त्रैस्तु मन्त्रस्नानमुदाहृतम् ॥"

इति मनूक्तं मन्त्रम् । "शन्नआपो धन्वन्याः शन्नोभवन्त्वनुप्याः शन्न समुद्रिया आपः शन्नोभवन्तु कूप्याः" इति मन्त्रस्यपाठः शाखीयत्वात् । मृदिति-- गङ्गादिमृत्तिकातिलकमिति द्वितीयः कल्पः । वातोद्धृतगोखुरोधृतरजसां देहे पतनमिति चतुर्थः । अनभ्रवृष्टिबिन्दुग्रहणमिति पञ्चमः ।

"आकाशगङ्गासलिलं समादाय गभस्तिमान् ।
अनभ्रगतमेरोव्यामन्तः क्षिपति रश्मिभिः ॥
तस्य स्पर्शविनिर्धूत - पापशङ्को द्विजोत्तमः ।
न याति नरकं मर्त्यो दिव्यं स्नानं हि तत्स्मृतम् ॥"

इति विष्णुवचनात् । अत्र हि द्विजोत्तम इत्यभिधानाद्विप्रस्यैवात्र स्नानेऽधिकारः । मन्त्रपाठसामर्थ्याच्च मन्त्रे विप्रक्षत्रवैश्यपुंसामित्याभाति । विष्णुचिन्तनन्तु मानसं स्नानमिति षष्ठोऽनुकल्पः । स्त्रीणामपि वेदमन्त्रहीनस्नान इव तदनुकल्पेऽप्यधिकारः । कर्मिणामिति सामान्यनपुंसकप्रयोगादिति ध्येयम् ।

## अथ तर्पणम्

स्नानाङ्गपञ्चपिण्डोद्धारेण प्रधाने स्नानाङ्गे वा तर्पणेऽङ्गस्य पिण्डत्रयोद्धारस्य प्रसङ्गात्सिद्धिः । स्नानाङ्गतर्पणेन च प्रधानतर्पणस्य प्रसङ्गात्सिद्धिः । उद्धृतोदकस्नाने स्नानानुकल्पे वा सन्ध्याप्रयोगान्तर्भूतेन तर्पणेन प्रधानसिद्धिः । त्रैवर्णिकस्य तदनन्ततेन स्त्रीशूद्रयोः कृतसन्ध्यावन्दनतर्पणस्य तु त्रैवर्णिकस्य राहूपरागतीर्थस्नानयोरङ्गतर्पणं सन्ध्याप्रधानतर्पणहीनमेव काम्यतर्पणं नाङ्गमनियतत्वादिति, तत्र प्रातःस्नानेन कार्यं प्रागेव कृतत्वात् । सूर्योदय-

भिन्नाऽनधिकाराच्च । उदिते रवौ तु यदि प्रातः स्नानीयं तर्पणं यदि वाहस्तर्पणे क्रियमाणे काम्यतर्पणमकृतवता कृतवता राहूपरागादिस्नानं क्रियते, तदा कार्यमेव काम्यतर्पणमधिकाराविरोधादकृतत्वाच्च । देशकालभेदेन फलभेदावगमाच्च । नित्यत्वं पित्र्यबलौ चानधिकारिणामसमर्थानां मनसानां वा तर्पणेन पितृयज्ञसिद्धिः ।

"न देवं तर्पयेदद्भिः पितृन् स्नात्वा द्विजोत्तमः ।
तेनैव सर्वमाप्नोति पितृयज्ञे क्रियाफलम् ॥"

इतिवचनात् । केवल प्रधानतर्पणञ्च विष्णुपुराणीयमेव कर्त्तव्यम्, अनारभ्याधीतत्वात् । तदुक्तम्--

विष्णुपुराणे-- "त्रिरपः प्रीणनार्थाय देवानामपवर्ज्जयेत् ।
ऋषीणाञ्च यथान्यायं सकृच्चैव प्रजापतेः ॥
पितृणां प्रीणनार्थाय त्रिरपः पृथिवीपते ।
पितामहेभ्यश्च तथा प्रीणयेत्प्रपितामहान् ॥
मातामहाय च तथा तत्पित्रे च समाहितः ।
दद्यात्पित्रेण तीर्थेन काम्यञ्चान्यच्छृणुष्वमे ॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथैव च ।
गुरवे मातुलादीनां श्वशुरे स्निग्धभूभुजे ॥
इदञ्चापि जपेदम्बु ददद्यात्मेच्छया नृप ।
उपकाराय भूतानां कृतदेवादितर्पणः ॥
देवासुरास्तथा यक्षा नागगन्धर्वकिन्नराः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥
जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः ।
तृप्तिमेते प्रयान्त्वद्य मद्दत्तेनाम्बुनाऽखिलाः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलम्मया ॥

"ये बान्धवाऽबान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिला यान्तु ये चास्मत्तोऽभिवाञ्छति ॥"

यथान्यायं देवोक्तरीत्या त्रिरिति यावत् । पितृणामित्यादि बहुवचन-त्रयं व्यक्त्यपेक्षया काम्यञ्चान्यदिति । एवञ्च प्रातःस्नाने मात्रादितर्पण-मपास्तम् । पुराणाद्युक्तञ्च काम्यमपीह विस्तृतम् । तर्दंदति वर्त्तमान-सामीप्येन च मन्त्राणाङ्करणत्वेन क्रियान्वयात् । अत्र मयेत्यन्तः सव्येन । पद्मपुराणीयोऽपसव्योत्तारमभिधानेन सम्बन्ध्यसम्बन्धिप्रमीतोद्देश्यकत्वेन येऽबान्धवा इत्यादिरपसव्येन कार्यः । नरकेष्वित्यादौ नरकोत्तीर्णा इहलोके वर्त्ति-माना एवोदेश्याः । स्थिता इत्यतीतत्वावगमादिति सव्यमविरुद्धम्, देवा सुरा इत्यादिना मयेत्यन्तेन एकन्तर्पणम् इदञ्चापि जपेदद्भिरिति मन्त्रे तर्पणजले चैकत्वावगमात् । ये बान्धवा इत्यादेरपसव्यपाठ्यतया मन्त्रान्तरत्वं तर्पणा-न्तरकरणत्वञ्च मन्तव्यम् ।

अग्निपुराणे—"नैवाङ्गोद्वर्त्तनङ्कार्यं स्त्रिया विधवया क्वचित् ।
गन्धद्रव्यस्य सम्भोगो नैव कार्यन्तया पुनः ॥
तर्पणं प्रत्यहङ्कार्यं शुद्धैः कुशतिलोदकैः ।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिकीर्त्तनैः ॥

षट्पुरुष तर्पणोत्तरनित्यम् । छन्दोगेन नरसिंहपुराणीय - स्नानमुपा-स्मै गायता इत्यादिना कुर्वाणा विष्णुपुराणीयमेव तर्पण कुर्वन्ति । युक्तं हि तत् परस्परसाकाङ्क्षत्वं हि पुराणयोः । माध्यन्दिनीयानान्तु न तत्रा-धिकारः । स्त्रीशूद्राणां वा "स नः पवस्वे" त्यादिमन्त्रविरहात् । पद्मपुराणीय-स्नानतर्पणे तु वाजसनेयिभिः, छन्दोगस्त्रीशूद्रै ऋग्वेदिभिः विष्णुपुराणीय-स्नानतर्पणे कार्याः । तर्पणजलं जलस्थेन जल एव त्याज्यम् ।

"भूमौ यदापो दीयन्ते दाता चैव जले स्थितः ।
वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित् ॥"

इति यमवचनात् ।

कार्ष्णाजिनिः—"नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ध्वमानसः ।

आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ॥"

जले त्यागश्चाकाले प्रक्षेपद्वारा । तथाहि-

सुमन्तुः – "आकाशे तु क्षिपेद्वारि जलस्थो दक्षिणामुखः ।"

मनुः—"त्रींस्त्रीन् जलाञ्जलीन् दद्यादुच्चैरुच्चतरं ततः ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥"

उच्चैरङ्गुलचतुष्टयमुद्धृत्य प्रथमोऽष्टाङ्गुलमुच्चतरमुद्धृत्य द्वितीयो द्वादशाङ्गुलमुद्धृत्य तृतीयोऽञ्जलिः पित्रादितर्पणे प्रक्षेप्य इत्यर्थः। "तस्माज्जले जलन्देयं पितॄणान्दत्तमक्षयम्" । इति कार्ष्णाजिनिवचनाज्जलतर्पणमधिकफलार्थिना जलस्थेन सामगेनातदर्थिना स्थलस्थेन स्थले तर्पणम् । तदशौचे तु स्थलस्थेन दार्वाद्युपविष्टेन कार्यम् ।

यदा शुचि स्थलं वा स्यादुदके देवतापितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥"

इति कार्ष्णाजिनिवचनात् ।

स्थलाशौचे माध्यन्दिनीयानां स्थलसन्ध्यावन्दनकृतां वहज्जले जलं प्रक्षेप्यम् । स्थलशौचे तु भूभावेव स्थलस्थानाम् । जलस्थानान्तु स्थलसन्ध्योपासनकृतां न जलस्थानां तर्पणम् । "गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्थाय ताञ्जपेत्" इति स्थलविहितगायत्रीजपोत्तरकृत्यतया क्रमभङ्गप्रसङ्गात् । कार्ष्णाजिनिवचनाद् गायत्रीजपानन्तरञ्च जले पुनः प्रविश्य तर्पणञ्च परिवर्त्तित वासाश्चेत्तीर्थतीरमवतीर्य "यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेदिति" वचनस्य निर्मूलत्वादित्याभाति । स्नानशाट्या तर्पणन्तु स्थल एव ।

"जलमध्ये तु यः कश्चिद् द्विजातिर्जलदुर्बलः ।
निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥"

इति पराशरनिषेधात् । भूमौ यदाप इत्याद्युक्तयमर्निषेधात् । स्थलाशौचे तु मन्त्रलिङ्गनावृतकाम्यताकस्य तस्य त्यागो न दोषाय । उच्छिष्टसन्निधावन्न प्रकरणस्येत्वास्यै तर्पणस्याशुचिस्थले निषेधो नेत्यन्ये । "नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।" उदके तर्पणनिषेधो जलस्थस्य शुष्कवस्त्रवतो यज्जले शुष्कवस्त्रेणेति वचनसम्वादात् । नैक पाणिनेति खड्गपात्रादिना तर्पणेऽप्येकहस्तकरणकत्वं निषेधति । पात्राञ्जल्योर्विकल्पास्मरणात् । जलस्थयोर्वैकल्पिकत्वादेकप्रयोगो नोभयाधिकरणसमाप्यः ।

शङ्खः—"विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठते" इति ।

कातीयतर्पणे मन्त्र आवश्यक इति सर्वशक्तिन्यायेन मन्त्रमन्तं विना न तदुक्ततर्पणं निरस्यति । ननु पौराणिके तर्पणे मन्त्रो विधीयते, गौरवात् स्त्रीशूद्रयोर्मन्त्रानभिज्ञस्य च त्रैवर्णिकस्य तर्पणे सङ्कोचापत्तेश्च । नच नियमबोधिकाश्रुतिस्त्रैवर्णिकतर्पणकरणिका श्रुतिर्वा कल्पनीयेत्यत्र विनिगमकाभावान्न गौरवमिति वाच्यम्, नोपतिष्ठत् इति स्वरसेन नियमस्यैव विधेः । नच कल्पभेदेऽपि तर्पणमेकङ्कर्म तथा च त्रैवर्णिकतर्पणसामान्ये मन्त्रनियमो ननु कातीये तर्पणविशेष इति वाच्यम् । सङ्कोचध्रौव्ये कातीयतर्पण एव कात्यायनतुल्यमेकतानुरोधेन नियमस्य विधातुमुचितत्वात् श्रीवत्सस्वरसोऽप्येवम् । "यैः कृतं पितृतर्पणमिति" लघुहारीतेन त्याज्यकुशकथनात् । षट्पुरुष तर्पण मोटकं त्यक्त्वा मोटकान्तरेण मात्रादितर्पणङ्कार्यमिति वाचस्पतिमिश्राः । तच्चिन्त्यम् । "देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रम" मिति शातातपेन त्रीन् पितृतः त्रीन् मातृतश्च पत्न्यश्च पितृतर्पणमि त, गोभिलेन देवर्षिपितृतर्पणमिति विष्णुपुराणेन मात्रादितर्पणस्यापि पितृतर्पणपदेन समुदायवाचिनाऽभिधानात् । एवञ्च प्रमीततर्पणानि कृत्वा मोटकस्त्याज्यः, दक्षिणकरधृता ऋजवोऽपि कुशास्त्याज्या एव, पितृतर्पणकरणत्वाविशेषादित्याकलयामः । यमतर्पणं स्नानशाटीपीडनं जलतर्पणञ्च काम्यत्वात् प्रातःस्नानेन कार्यमाद्यञ्च कातीयान्यकल्पे मानाभावान्न कार्यम् ।

याज्ञवल्क्यः "एतांस्तु वक्ष्यमाणांस्तु प्रमीतपितृको द्विज ।
वसून् रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान् ॥

त्रैवर्णिकानां स्वधापदं शूद्रादीनां नमःपदं त्यागार्थकमभिलप्यम्। तुल्यार्था-स्तु विकल्पेरन्निति वचनात्। "नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वश" इति वचनात्। "नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्" इति शूद्रमुपक्रम्याभि-धानाच्च। स्नानतर्पणे स्वकृतजलाशये कार्यं नेति तिर्यगधिकरणमवतार्य सर्वान्नार्यान् श्रावयन्ति **मिश्राः**। ये तु मीमांसासिद्धान्तवार्त्तानभिज्ञाः एक-स्येन्द्रस्यहविस्त्यागे कर्तृत्वमुद्देश्यत्वमविरुद्धमिति देवतानामनधिकारो यज्ञ इति नाधिकरणार्थः। किन्तु ब्राह्मणत्वादिजात्यभावाज्जातिविशेषनियत-राजसूयादौ देवतानामनधिकार इति। अतएव यज्ञान्तरं मिश्रादीनां पुष्कर-प्रादुर्भावे व्यक्तमुक्तम्।

न च ब्राह्मणसामान्योद्देशेन त्यक्तहिरण्यं स्वयं गृह्णीयादिति वाच्यम्। हिरण्यन्दद्यादित्यत्र परस्वत्वफलकक्रियाया विधेयत्वात्। उत्सृष्टवृषे तदन्यो नयेदित्यादि निषेधनाम्नोपादानमुत्सृष्टवृषञ्च पक्षसमम्।

**वसिष्ठः**—"स्नानशाट्यान्तु दातव्या मृदस्तिस्रो विशुद्धये।" गुह्याङ्गच्युत-वारिसम्बन्धादशुद्धस्याधरीयस्य शुद्धये सव्येनैव मृत्त्रयदानङ्कार्यम्। नतूत्तरी-येऽपि, एकवचनस्वरसात् शुद्धय इत्यसङ्गतेश्च। अतएवाङ्गमार्जनाय तर्पणात्प्राक् जलमध्ये च निष्पीडयन्त्युत्तरीयम्। तन्निष्पीडनजलेन नाचर-न्ति तर्पणं शिष्टाः।

"निष्पीडयति यः पूर्वं स्नानवस्त्रन्तु तर्पणात्।
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः॥"

अन्नप्रकरवत्तस्यापसव्येन पीडनमन्नप्रकरसादृश्यमास्तृतकुशोपरि कर-णं पीडनस्यापसव्यकर्त्तव्यस्याङ्गमृत्तिकात्रयदानं तदङ्गत्वादपसव्येनैवेति **मिश्रसम्मतमयुक्तम्**। "शुद्धय" इति मृत्तिकात्रय- दान-फलबोधनेनाङ्गत्वा-भावात्। इत्थञ्च काम्यतयोरशिषस्तेन शाटीशोधनकाम्यतज्जलकरणकतर्प-णाकरणञ्च युज्यत इत्युपरम्यते।

**योगी**—प्राचीनावीत्युदकन्तु प्रसिञ्चेद्वै तिलान्वितम्।
यद्यधृतञ्च प्रसिञ्चेद्वै तिलान् संमिश्रयेज्जलैः॥

अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ।
दक्षिणेन पितृतीर्थेन जलं सिञ्चेद्यथाविधि ॥
दक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः ॥"

वामहस्ते तद्धस्तगृहीतास्तिला दक्षिणपितृतीर्थाहृतजलं तद्धस्ते स्थितं त्याज्यम् ।

शङ्खः—"कायस्थैर्यत्तिलैर्मोहात्करोति पितृतर्पणम् ।
तर्पिताः पितरस्तेन त्वङ्मांसरुधिरास्थिभिः ॥"

कायस्थै - रुरु हृदयादिस्थापितैः ।

## अथ सन्ध्योपासनम्

तत्र छन्दोगपरिशिष्टे - "एतत्सन्ध्यात्रयं प्रोक्तं ब्रह्मण्यं यदधिष्ठितम्" ।

सन्ध्यापदमत्र तदुपासनार्थकम् - "सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मविदा सदेति ।"

विष्णुपुराणे—"सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥"

अत्र सूतकशावाशौचयोर्विशिष्यग्रहणाद् ब्रणेऽपि कार्या सन्ध्येति केचित्, तन्न । सव्रणः सूतकः सूतीति वचनानुसारेणाशौचपदस्य जननाप्रयोज्याशौचप्रतिपादनात् । "सायं सन्ध्यामुपासीरन् क्षतिनस्ते महारथाः" इति भारतवचनस्य शिष्टानादृतस्यानाकरत्वात् ।

राजमार्त्तण्डे—"दानं प्रतिग्रहं सन्ध्यां श्राद्धं कृत्वा विवर्जयेत्" ।

गौडाः—"द्वादश्यां पक्षयोरन्ते सङ्क्रान्तौ श्राद्धवासरे ।
सायं सन्ध्यां न कुर्वीत पितृहा तेन जायते ॥"

इति तदनाकरमाचारविरुद्धञ्च । तिसृणां सन्ध्यानां प्रयोगभेदादेकाकरणेऽप्यपरोऽपास्या । स्मृतिमञ्जूषायाम् - "आपद्यध्वन्यशक्तौ च सन्ध्या-

ङ्कुर्वीत मानसीम् ।"

योगी--"ह्रासवृद्धी तु सततन्दिवसानां यथाक्रमम् ।
सन्ध्यामुहूर्त्तमात्रन्तु ह्रासे वृद्धौ समा स्मृता ॥"

प्रातस्सन्ध्या दण्डद्वयमेव सर्वदेत्यर्थः ।

स्कान्दे-"उदयात्प्राक्तनी सन्ध्या घटिकाद्वयमिष्यते ।
सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥"

विश्वादर्शे--"प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमिष्यते । सादित्यां पश्चिमां सन्ध्याम्" इति वचनाद्दिनशेषघटिकामादाय दण्डचतुष्टयः कालः ।

शिष्टा--अतीतामप्युपासीत सायं सन्ध्यान्द्विजोऽन्वहम् ।"

योगी--"ऐशान्याभिमुखो भूत्वा शुचिः प्रयतमानसः ।
आचान्तः पुनराचामेदृतमित्यभिमन्त्रितम् ॥"

आचान्त इत्यनेन पादक्षालनादिनिमित्तकमाचमनमनूद्य मन्त्रेण सकृदाचमनं विधीयते । ऐशान्यां विशिष्यग्रहणादाचमने प्रागुदीचीमुखत्वव्यवच्छेदः ।

स्मृत्वौंकारञ्च गायत्रीं निबध्नीयाच्छिखान्ततः ।
पुनराचम्य हृदयं नाभिं स्कन्धौ च संस्पृशेत् ॥

कात्यायनः--उत्तार्य्य धौते वाससी परिधाय मृदोरुकरौ प्रक्षाल्याचम्येत्यादि ।

विष्णुः— स्नातश्शिरो नावधुनेन्नाङ्गेभ्यस्तोयमुद्धरेत् । न तैलरसे स्पृशेत् । नाप्रक्षालितं पूर्वधृतं वासो विदध्यात् । स्नात एव सोष्णीषे वाससी बिभृयान्नम्लेच्छान्त्यजपतितैस्सह सम्भाषणं कुर्यात् ।

भारते—"राजहंसनिभं प्राप्य उष्णीषं शिखिनापितम् ।
जलक्षयनिमित्तम्वै धारयामास मूर्द्धनि ॥"

गौड़ाः— पक्वतैलं न दुष्यति । शाकतैलञ्च तिलप्रभवत्वविरहाददुष्ट-

मेव। उरू इति चरणयोरूपलक्षकम्। कौपीनश्चोत्तरवारि सम्बन्धस्याशुद्धि-बीजस्याविशेषात्। एवञ्च वारिसम्बन्धप्राथम्यादुर्वो जानुपर्यन्तयोरथ गुल्फ-पर्यन्तं मध्ये पादाग्रपर्यन्तं प्रत्येकं प्रत्येकं पादद्वये ततो मिलितयो: करयोर्मृत्ति-कात्रयदानमर्थः। स्नानं प्रक्रम्य—

कात्यायनः-- प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीतीत्या-चम्येत्यादि।

स्मृति:- "ऐशानीन्दिशमाकाङ्क्षन्नैर्ऋत्याम्ब्रह्मरन्ध्रतः।
शिखिवच्छिखिना युक्तो ब्रह्मावर्त्तनिबन्धया॥"

ब्राह्मे-- "गायत्र्या च शिखां बद्ध्वा नैऋत्याम्ब्रह्मरन्ध्रतः।
जटिकाञ्च ततो बद्ध्वा कर्म वैदिकमाचरेत्॥"

पवित्रमधिकृत्य सन्यासपद्धतिः--"सव्यापसव्यबलितं ब्रह्मग्रन्थिसमन्वितम्।
लङ्घयेत्पर्वमेकन्तु द्विपर्वीन्नैव लङ्घयेत्॥"

सव्यबलितयोः प्रत्ययोः प्रदक्षिणबलने नाङ्गुरीयकतामापाद्य बलितदक्षि-णानामिकायामङ्गुरीयकवद्धार्यमाणमेकपर्वोत्तरं द्वितीयपर्वमध्ये रक्षणीय-मित्यर्थः।

कालिकापुराणे--"द्विरावर्त्याऽथमध्येनै वार्द्धावृत्यान्तदेशतः।
ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थिसङ्ज्ञकः॥"

शिखा पवित्रयो: सार्द्धा द्विरावृत्तिर्ग्रन्थिश्छन्दोगानाम्। वाजसनेयिनान्तु सार्द्धा वृत्तिराचारसिद्धा।

लघुहारीतः-- "अनन्तर्गर्भिणं साग्रङ्कौशन्द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥"

वर्हादिभ्य इणचितिसूत्रात् गर्भिणशब्दो वर्हिणशब्दवदकारान्तः। विशेष्यवाच-कदलपदलिङ्गग्रहणान्नपुंसकम्। द्विदलं पत्रद्वयम् नतु प्रान्तद्वयवदेकं पत्रम्। बहुब्रीहिगर्भयोगमपेक्ष्य रूढेर्दुर्बलत्वात्। सव्यापसव्यबलनासङ्गतेश्च।

छन्दोगपरिशिष्टे--"सव्ये पाणौ कुशान्कृत्वा कुर्यादाचमनक्रियाम् ।
सव्यस्सोपग्रहः कार्यो दक्षिणः सपवित्रकः ।।"

अग्रिमकार्यार्थमुपसमीपे ग्राह्याः । कुशा वामहस्त एव धार्या । आचमनोपयोगिकुशसमीप इत्यर्थः । एवञ्च दक्षिणहस्ते यदाचमनपूर्वं कुशत्रयधारणं लिखितं श्रीदत्तैस्तद्दर्भाः पवित्रमिति पवित्रलक्षणपरमिति वादिनाम्मतमधिकृत्येत्याभाति । अनुकल्पमाह--"पवित्रङ्कुर्यात् साग्रं प्रादेशसम्मित" मिति नरहरिमहामहोपाध्यायास्सदाचारानुसारिणः । नच लघुहारीतवचनमप्येतत्समानार्थकमेवास्त्विति वाच्यम् ।

द्विदलपदे बहुव्रीहेरनर्थकत्वस्य कौशमिति प्रत्ययार्थकस्य च प्रसङ्गाद्, अनन्तर्गर्भिणमित्यसङ्गतेश्च । नचान्तस्थित एव न गर्भीयस्येति मध्यपत्रद्वयं वहिःकृत्य प्रान्तदलद्वयवत्कुशरूपं पवित्रमित्यर्थः । पत्रयोर्मध्यस्थयोरपकर्षणेन कुशविकारजननात्कौशमित्युक्तम् । बहुव्रीहेश्चैकवाक्यतालाघवानुरोधेनाङ्गीकार इति वाच्यम् । शक्त्यर्थानुरोधेन वाक्यभेदस्य न्याय्यत्वात् । अन्यथा--वाजपेयेन यजेतेत्यस्य अश्वमेधलक्षणयाऽश्वमेधेन यजेतेति वाक्यैकवाक्यतापत्तेः । एककृते पुनरभिधानं दानार्थमिति सुवचत्वादित्यलं सर्वसिद्धेऽर्थे विचिकित्सया । वासःपरिधानानन्तरम्-

भारते-- "गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना विभर्त्ति यः ।
विभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ।।
मूर्ध्नि कण्ठे ललाटे च वाहुभ्यां हृदये तथा ।
नाभौ पृष्ठे प्रदातव्यं पार्श्वयोश्च द्वयं द्वयम् ।।"

ऊर्ध्वञ्चेदतिलकं श्वेतोर्ध्वपूण्ड्रोऽज्वल" इति क्रमदीपिकावचनात् ।

वामनपद्धतौ-"ललाटे वंशपत्राभं दीर्घं विप्रस्य शस्यते ।
मीनाकारं ततो न्यूनं क्षत्रियस्य प्रशस्यते ।।
ततो न्यूनञ्च वैश्यस्य शूद्रस्याप्यर्द्धचन्द्रकम् ।
तिर्यक् तथायतं पुण्ड्रं नित्यकर्माङ्गमिष्यते ।।"

इति वचनात्कर्मस्नानोत्तरकृत्यम्, स्नानं विना तिलकस्य निषेधात्। पठन्ति च— "त्रिपुण्ड्रं भस्मना कार्यं चन्दनेन यथारुचि"। तदेवमेषामलाभस्थले

शिष्टाः—"अलाभे तूदकेनापि पुण्ड्री दैवतमर्चयेत् ।"

देवतार्च्चनं वैधकर्मोपलक्षकम्। नातिलकी कर्म कुर्यादिति वचनानामेकतयाक्रमः। स्नात्वाऽङ्गेभ्य उत्तरीयादिना जलमपनीय श्वेतवस्त्रवेष्टनेन शिरोजलललाटस्थं तिलकं निश्शेषीकृत्य उष्णाम्बुमपनीय वाससी परिधायोरूजङ्घे चरणौ करौ मृदा त्रिभिः प्रक्षाल्य मुक्तशिखश्चेत्तदा प्रणवपूर्वकगायत्र्याब्रह्मरन्ध्रनैर्ऋत्यां शिखाग्रन्थिं सार्द्धं द्विरावृत्तं छन्दोगानाम्। वाजसनेयिनान्तु सार्द्धावृत्तम्। वामकरे गृहीतबहुतरकुशो दक्षिणकरगृहीतपवित्रो बध्नीयात्। दक्षिणकरेण जूटिकाञ्च बध्नीयात्। नष्टोपवीत उपवीतम्परिधाय गङ्गामृदादिना तिलकमूर्ध्वं कृत्वैशानमुखो द्विराचम्य ऋतञ्चेत्यादिमन्त्रेण तृतीयमाचमनमिन्द्रियस्पर्शरहितचुलुकत्रयरूपं कुर्यादिति।

लघुहारीतः— "आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः ।
नोच्छिष्टस्तु भवेत्तेन भुक्तशेषन्तु वर्जयेत् ॥"

आचमनोच्छिष्टजलस्पर्शनपवित्रं नाशुचीत्यर्थः। कुशस्तु तत्स्पृष्टो दक्षिणकरस्थोऽशुचितया त्याज्य एव। श्राद्धाद्यर्थाचमनकुशत्यागाचारश्चात्र सम्बदति।

"नीवीमध्ये च ये दर्भा यज्ञसूत्रे च ये धृताः ।
पवित्रांस्तान्विजानीयाद्यथाकाशस्तथा कुशाः ॥"

इति वचनस्तूक्तस्थलद्वय एव मूत्रोच्छिष्टादिदूषितपुरीषधृतकुशानामशौचार्थकमित्यविरोधः। परमार्थतस्तु—

"पानमाचमनं कुर्यात् कुशपाणिः सदा द्विजः।
शुचौ तूच्छिष्टतां याति एष एव विधिःस्मृतः ॥

पानमाचमने चैव तर्पणे दैविके सदा ।
कुशहस्तो न दुष्येत यथा पाणिस्तथा कुशाः ॥
वामे पाणौ कुशान्धृत्वा दक्षिणेन उपस्पृशेत् ।
आचामन्ति च ये मूढा रुधिरेणाचमन्ति ते ॥"

"नीवीमध्ये च ये दर्भा" इत्यादि मूत्रोच्छिष्टपुरीषेष्वेतेषां त्यागो विधीयत इति लिखितस्मृतेः । "वामहस्तस्थिते दर्भे यत्तोयं पिबति द्विज" इत्यादिनिषेधाच्च दक्षिणहस्तेऽपि कुशधारणं तदनुच्छिष्टता चेति मन्तव्यम् । **श्रीदत्तानुमतश्चायमर्थः** । ऋतमित्यादिनाचमनं प्राणायामश्चान्तरशुद्धेर्मार्जनञ्च वायुशुद्धेः फलस्य जनकम् । अघमर्षणत्वेनोपादानात्तज्जपः पापनाशफलकः । प्रदक्षिणाभिध्यानयोः पापनाशभद्रप्राप्ती फले । सूर्यायार्घादिदाने सन्देहापसारणजन्यसूर्यप्रीतिफलके । सूर्यश्च मेत्यादिनाचाचमनं वा त्र्यहःकृतपापनाशफलकम् । गायत्रीजपश्च सम्पूर्णशाखाध्ययनमुखोऽश्वमेधसहस्राधिकपुण्यसर्वपापविमोकफलकः । सूर्यगायत्र्योरुपस्थानेऽन्तश्चरसीत्युपस्पर्शनश्चाङ्गम् । तर्पणन्तु स्नानाङ्गम्, प्रधानञ्च सन्ध्यामध्ये तच्छेषे वा प्रयोगविधिबलात्क्रियमाणमपि सन्ध्याभिन्नमेव ।

एवञ्च षट्करणयाग इव मिलितप्रधानकत्वं सन्ध्याकर्मणः । अतएव सन्ध्याप्राणायामादिकं कर्मेति **वाचस्पतिमिश्राः** ।

"ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुमवाप्नुयुः ।"

इति वचनाद्गायत्रीजपाधिक्येन दीर्घत्वमित्येवायाति । तच्चाङ्गस्य प्रधानस्य वा दीर्घत्वे तुल्यमेव प्रयोगदैर्घ्यस्योभयथानिष्पत्तेरित्याकलयामः ।

एतावत्तु नित्यं कार्यञ्च, शन्न आपो धन्वन्या इति द्रुपदादिवेति कार्यमेव । विभ्राडादिना सूर्योपस्थानञ्चैच्छिकम् । तर्पणोत्तरकृत्यानि ब्रह्मादिपूजनसूर्यार्घदानब्रह्मयज्ञादीनि सन्ध्यावहिर्भूतानीति वक्तव्यम् ।

कात्यायनः - "पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणोऽन्तिकम् ।
रेचकेन तृतीयेन गमयेदैश्वरं पदम् ॥"

याज्ञवल्क्यः — "प्राणस्यायमनङ्कृत्वा कुर्यादाचमनक्रियाम् ।
आन्तरम्विद्यते यस्मात्तस्मादाचमनं स्मृतम् ॥"

हेतुमन्निगदेन छन्दोगसाधारणमिदम् ।

गोभिलः – "गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्थाय तां जपेत् ।"

इदमपि हेतुमन्निगदत्वाद्वाजसनेयिसाधारणम् । तदत्र ऋतमित्यादिनाऽचमनं प्रथममैशानीमुखेन सन्ध्यासु तिसृष्वपि कार्यम् । स्नानसूर्योपस्थान-सूर्याञ्जलिदानगायत्रीजपतदुपस्थानावाहनाङ्गन्यासाः सूर्याभिमुखेन कार्याः ।

ब्रह्मयज्ञश्च प्रागुदीच्यन्यतरमुखेन कार्य्यः । देवानां प्राङ्मुखेन सनकादीनामुदङ्मुखेन पितृणां तर्पणन्दक्षिणमुखेन कार्यम् । शेषास्तु स्नानसन्ध्याप्रयोगान्तर्गताः पदार्थाः प्राच्युदीच्यैशानोत्तरमुखेन कार्य्या इति मुनिवचनस्वरससिद्धाऽर्थः ।

छन्दोगपरिशिष्टे—"उत्थायार्कम्प्रतिप्रोहे त्रिकेऽञ्जलयोम्भसः ।
प्रणवो भूर्भुवःस्वश्च सावित्री च तृतीयका ॥"

पुष्पमिश्रितजलाञ्जलित्रयेण सूर्यमुद्दिश्य प्रक्षिपेदित्यर्थः । पुष्पाण्यम्बुमिश्राण्युर्ध्वम्प्रक्षिप्येति पारस्करात् ।

"सन्देहदेहनाशार्थ - मुदयास्तमये रविः ।
समीहते द्विजोत्सृष्टं मन्त्रतोयाञ्जलित्रयम् ॥"

इति काशीखण्डाच्च ।

काशीखण्डे- "स्नाने देवार्च्चने जप्ये मलमूत्रविसर्जने ।
मौनं कुर्यात्प्रयत्नेन दन्तधावनहोमयोः ॥"

छन्दोगपरिशिष्टे- "तदसंसक्तपार्ष्णिर्वा एकपादार्द्धपादपि ।
कुर्यात्कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथापि वा ॥"

तत्सूर्योपस्थानं कुर्यादिति शेषः । असंसक्तपार्ष्णिः- परस्परासंयुक्तगुल्फ-भूमिष्ठपादद्वयः । एकपात्- भूमिष्ठमात्रचरणः । अर्द्धपादः-- भूमिष्ठैकपादाग्रः । कृताञ्जलिरिति सायं प्रातःपरम् । उर्ध्ववाहुरिति-मध्याह्नपरम् । तत्प्रकरणीय पारस्करयोगिनोः सम्बादात् ।

याज्ञवल्क्यः-- "जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।
सन्ध्याप्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥"

प्रत्यक् पश्चिममुखः, सायंसन्ध्यामधिप्रावपूर्वमुखः, प्रातःसन्ध्यामधि उर्ध्व-स्थो भवेदेवं सायमिव कृताञ्जलिः । मध्याह्नसन्ध्यायाम्--

योगी-- "तिष्ठश्चेद्वीक्षमाणोऽर्कं जपं कुर्यात्समाहितः ।"

चेदित्यनेनाशक्तौ मध्याह्नजप उपविश्य कर्त्तव्य इति सूचितम् ।

शङ्खः--"कुशकूर्चां समासीनः कुशोत्तरायां कुशोपरि पवित्रपाणिरुदङ्मुखः पूर्वाभिमुखो वा ।

गायत्रीजपानन्तरं कात्यायनः-- विभ्राडित्यनुवाकपुरुषसूक्तशिवसङ्कल्प-मन्त्रलक्षण ब्राह्मणैरित्युपस्थाय नमस्कृत्वोपविशेद्दर्भेषु । विभ्राड्वृहदित्याद्याः सप्तदश सहस्रशीर्षेत्याद्याः षोडश यज्जाग्रत इत्याद्याः षड् शिवसङ्कल्पः । यदेतन्मण्डलमित्याद्या त्रयोविंशतिरिति उदुत्तममिति वदूर्ध्ववाहुतया । इदञ्च काम्यम् । प्रातःसन्ध्यायां क्रियमाणायां सूर्योदये जाते आभ्युदयिकार्थकृते शिशिरकर्त्तव्ये वोदयोत्तरसन्ध्यामध्याह्नक्रियमाणसन्ध्यायां वा ।

छन्दोगपरिशिष्टे---"सन्ध्यात्रयेऽप्युपस्थान - मेतदाहुर्मनीषिणः ।
मध्याह्न उदये वाऽपि विभ्राडितीच्छया जपेत् ।."

इत्यभिधानाद् । अयञ्जपो माध्यन्दिनीयानामेव । मन्त्राणां तच्छाखीयत्वात्, वचनस्य माध्यन्दिनसूत्रकारीयत्वादिति ।

छन्दोगपरिशिष्टे---

कात्यायनः-"ऋचम्पठन्मधुपयः कुल्याभिस्तर्पयेत्सुरान् ।
घृतामृतौ सुकुल्याभिर्यजूँष्यपि पठंस्सदा ॥
सामान्यपि पुराणानि सेतिहासांस्तथान्वहम् ।
ऋगादीनामन्यतममेतेषां शक्तितोन्वहम् ॥
पठन्मध्वाज्यकुल्याभिः स्वपितॄनपि तर्पयेत् ।
ते तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव च ॥
कामचारी च भवति सर्वेषु सुरवेश्मसु ।
गुर्वप्येनो न स्पृशति पंक्तिञ्चैव पुनाति सः ॥
यं यं क्रतुञ्च पठति फलभाक्तस्य तस्य यः ।
त्रिवित्तपूर्णपृथिवीदानस्य फलमाप्नुयात् ॥
योऽयं श्रुतिजपः प्रोक्तो-ब्रह्मयज्ञः स उच्यते ।
स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥
वैश्वदेवावसाने वा नान्यत्रर्त्ते निमित्तकात् ॥"

अध्यापनं ब्रह्मयज्ञ इत्यन्यत्राभिहितम् । तेनाध्यापनं श्रुतेर्जपो वा ब्रह्मयज्ञः । "अहरहः स्वाध्यायमधीयीत" इति श्रुतिरुभयमप्याह ।

मनुः- "नैत्तिके नास्त्यनध्यायस्तद्धि ब्रह्ममयं स्मृतम् ।"

नानध्याय इति मानस जपपरम् । मानसेऽनध्याय इत्यापस्तम्बवचनात ।

कात्यायनः—स्वाध्यायञ्च यथाशक्त्यादावारभ्य वेदमुपक्रममारभ्याधीयीत । ग्रन्थेऽग्रिमाग्रिमदिनेऽग्रिमा वेदमधीयीतेत्यर्थः ।

स्वशाखाध्ययनं पश्चात्पुराणादिपाठश्च द्विजातिभिः । अनुपनीतैर्वेदानभिज्ञानुपनीतैः शूद्रैश्च पुराणादिपाठमात्रङ्कृत्वा ब्रह्मयज्ञो निर्वाह्यः । "दानन्दद्याच्च शूद्रोऽपि पञ्चयज्ञैर्यजेत चेति ।" इति वचनात् । अर्वाक - अनन्तरमिति छन्दोगपरम् । आनन्तर्यञ्च गायत्रीजपव्यवहितम्, गोभिलसम्वादात् । अर्वागेन इत्यादाविव पश्चादित्यर्थो युज्यते ।

माध्यन्दिनीयान् प्रति तु तर्पणात्प्रागित्यर्थः। "अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडशः, इत्यर्वाक्पदस्य पूर्वबोधकत्वदर्शनात्।

अतएव—"अथातो गोभिलोक्तानामन्येषाञ्चैव कर्मणाम्।
अस्पष्टानां विधिं वक्ष्ये सम्यग्दर्शन - मिष्यते॥"

प्रदीपवदिति प्रतिज्ञा ग्रन्थादौकृतायुज्यते। कात्यायनस्य माध्यान्दिनीयसूत्रकारित्वादपि तत्कर्त्तव्यबोधकत्वं युक्तमेव। शूद्रानुपनीतयोस्तु अन्तरमित्येवार्थः। सन्ध्यायामनधिकारात्। अङ्गतर्पणप्रधानस्नानाव्यवधानौचित्यात्। पश्चाद्वेति साग्निपरम्। तेषामेव प्रातराहुतिकारित्वात्। द्वितीयभागेऽपरञ्च "द्वितीये च तथा भागे वेदाभ्यासो विधीयत" इति दक्षसम्वादात्। अवसान इति बल्यन्तप्रयोगसमाप्तिपरम्। अतएव पश्चाद्युपस्थितस्य नाभिधानमनुषङ्गो वाऽत्राभिप्रेतः। वामदेव्यगानं बल्यन्तकर्त्तव्यम्।

यत्तु वेदो ब्रह्मयज्ञ इति तु नारायणभट्टस्तच्चिन्त्यम। शूद्रसाधारण्याभावेन सङ्कोचात्तेः, स चेत्युपक्रमे विशेषस्मरणाच्च। नान्यत्रेति। उक्तं कालत्रयं निमित्ताम्विहायान्यत्रकाले न कुर्यादित्यर्थः। तेन सन्ध्यादिवद्गौणकाले करणमपास्तम्। वैश्वदेवार्न्भकरणां श्राद्धां कृतवता च नाधिकालः। वैश्वदेवा वसानत्वाभावात्।

"निवृत्य प्रणिपत्याथ पर्युक्ष्याग्निं समन्त्रवित्।
वैश्वदेवं प्रकुर्वीत नैत्यक बलिमेव च॥"

इति वचन एवकारेण व्यवच्छेदात्। श्राद्धोत्तरं विशिष्टस्वाध्यायनिषेधात्। तदहरित्युपक्रम्य स्वाध्यायस्य निषेधेऽपि तर्पणसमये मनसा ब्रह्मयज्ञः कार्यो निषिद्धस्य पश्चार्द्वशिष्य निषेधेनैव गम्यते।

परे तु वह्नौ हुत्वेत्यभिधानादन्वष्टकामासीरन् पयुक्ष्याग्निमित्यभिधानाद्वैश्वदेवश्राद्धोत्तरकर्त्तव्यसाग्नेरेवाधिकार इति श्राद्धकर्तुर्निरग्नेर्वैश्वदेवविरहान्न तदुत्तरकाले ब्रह्मयज्ञः। साग्नेस्तूक्तयुक्तिभ्यामेव नेति वदन्ति।

केचित्तु वह्नौ हुत्वेति वैकृतविशेषोपदेशः प्राकृतजलविप्रप्रापाण्याद्याधारव्यवच्छेदः।"न पितृयज्ञियो होमो लौकिकाग्नौ विधीयत" इति लौकिकाग्नौकरणहोमो निषिद्ध इत्यनुभवामः।

यमस्तु साग्निमात्रस्याधिकारः। प्रकृते तु पक्षप्राप्तेऽग्नौ पर्युक्ष्येति विशिष्यविकृतावभिधानं पर्युक्षणभिन्नेति कर्त्तव्यतां निषधति। नत्वग्निमित्यंशेऽपि विधेयो वाक्यभेदप्रसङ्गादिति विवेचयन्ति।

निरग्नयः शिष्टाश्च वैश्वदेवबली श्राद्धोत्तरमाचरन्ति। निरग्नित्वञ्च स्मृत्यन्तरेषु निषिद्धम्, यावज्जीवमग्निहोत्रञ्जुहोतीति होमस्य नित्यस्याकरणे पापञ्चापरगतम्, तथाप्यसामर्थ्येऽग्निहोत्राकरणमविरुद्धम्। निषेधस्त्वग्नेर्नाशवत्परः। यावज्जीवमित्यपि आधानोत्तरं यावज्जीवमग्निः पाल्य इत्यर्थपरम्। अष्टधादिनं विभक्त्याह--

"दक्षाङ्गिरश्चाद्यभागे कृत्यं तस्योपदिश्यते।
उत्थायावश्यकं कृत्वा मूत्रशौचं समाहितः॥
पूर्वां सन्ध्यां जपन् तिष्ठेत् स्वकाले चापरां चिरम्।"

चिरमिति दण्डचतुष्टयार्थकम्।

"उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत्।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥
सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते ।
स्वयं होमफलं यत्तु तदन्येन न जायते ॥
ऋत्विक्पुत्रो गुरुभ्राता भागिनेयोऽथ विट्पतिः।
एतैरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥
दिवसस्याद्य भागे तु सर्वमेतत्समाचरेत् ।
द्वितीये च तथाभागे वेदाभ्यासो विधीयते॥
समित्पुष्पकुशादीनां स कालः समुदाहृतः।
तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ॥

माता पिता गुरु र्भार्या प्रजादीनः समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥
अन्योऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः ।
ज्ञातिर्बन्धुजनक्षीणः तथाऽनाथः समाश्रितः ॥
भोज्यं वस्त्रं हिरण्यञ्च अन्यञ्चापि तथाविधम् ।
ज्ञानवद्भिः प्रदातव्यमन्यथा नरकम्व्रजेत् ॥
चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत् ।
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले ॥
मार्ज्जनं जलमध्ये तु प्राणायामो मतस्ततः ।
उपस्थानं ततः पश्चाद्गायत्रीजप उत्तमः ॥
पञ्चमेऽपि दिवाभागे सम्विभागो यथार्हतः ।
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥
सम्विभागन्ततः कृत्वा गृहस्थः शेषभुग्भवेत् ।
इतिहासपुराणाद्यैः षष्ठ - सप्तमकौ नयेत् ॥
अष्टमे लोकयात्रा तु वहिःसन्ध्या ततः परम् ।
प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ॥
यामद्वयं शयानो हि ब्राह्मणो नावसीदति ।
शर्वर्य्या मध्यमौ यामौ हुतशेषं हविश्च यत् ॥
भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥"

आद्यभाग इत्यजहत्स्वार्थलक्षणया तत्पूर्वमुहूर्त्तद्वयसङ्ग्राहकम् । विट्-पति-जामाता । प्रजा-अपत्यम् । अत्र साध्वीभार्या शिष्टःसुत इति विशेषो मनुना दर्शितः । दीनो-दरिद्रः । सन्नाश्रितः अनाथो निष्पादितभक्षरक्षकहीनस्सन्नाश्रितः क्षीणो रोगकृशः । पुष्पकुशेति पूर्वोपात्तस्थ जलाशयनयनार्थकं जल इत्यग्रे दर्शनात् । आदिपदेन शौचार्थतिलकार्थमृदोर्ग्रहणं यवस्य च । स्नानमिति गात्रा-लम्भार्थकमृण्मययोः प्रतिपादकम् । मार्ज्जनं- स्नानप्रयोगान्तर्गतम् । प्राणायामोपस्थानञ्च यतस्ततो जले स्थले वा । ततो जलादुत्तीर्य्य जपः वहिर्गृहात् ।

ब्रह्मचार्य्यादीनान्तु ग्रामाद्बहिः। शयान इति व्यवच्छेदपरमिति दर्शयति। शर्वर्य्या इत्यादि यदित्यनन्तरं तदित्यशेषः।

## अथ देवपूजा

कालिकापुराणे—"वरं प्राणपरित्यागः शिरसोवाऽपि कर्त्तनम्।
न त्वसम्पूज्य भुञ्जीत केशवं कौशिकीं शिवम्॥
शिवं भास्करमग्निञ्च केशवं कौशिकीमपि।
मनसाऽनर्चयन् याति देवलोकादधोगतिम्॥"

कौशिकीं दुर्गां मनसापीत्यन्वयः। तेन पुष्पाद्यभावे मनसाप्येते पूज्याः। मानसपुष्पादिकल्पनया पूज्या इति वाऽर्थः। एवं पूजा नित्येति सिद्धम्।

मात्स्ये— "आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्।
ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात्॥"

इतो गोप्रदानफलादीनामन्यत्र कथनाच्च पूजा काम्याऽपि काम्यप्रसङ्गेन नित्यसिद्धि।

ब्राह्मे – 'अपूज्य प्रथमं सूर्यमपरान् यः प्रपूजयेत्।
न तद्भूतक्ृतं पापं सम्प्रतीच्छन्ति देवताः॥"

पाद्मे – "रविर्विनायकश्चण्डी ईशो विष्णुश्च पञ्चमः।
क्रमेणानेन पूज्यन्ते व्युत्क्रमेण महद्भयम्॥"

अग्निपूजा तु रविर्विनायक इति क्रमाविरोधेन तदनन्तरङ्कार्या। भास्करमग्निञ्चेति पाठक्रमो दुर्बलः शाब्दक्रमापेक्षयेति मन्तव्यम्। गणपतिपूजा तु काम्यैव। "महागणपतेः कार्यसिद्धिम्प्राप्नोति मानवः।" इति देवीपुराणात् महत्पदं प्रसंसार्थम्, महाभारतवत्॥

## अथेष्टदेवतापूजा

आगन्तुकानामन्ते विनिवेशात् काम्या। पार्थिवशिवलिङ्गपूजा तु

सर्वशेषे । सूर्योपस्थानतर्पणबलिकर्मसु नित्यान्तरमेव काम्यबोधनादागन्तुकत्वाच्च । पार्थिवशिवलिङ्गपूजामाह—

ब्राह्मे— "हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेवेतिसर्ज्जयेत् ॥
मृत्तिकाग्रहणे चैव घटने च प्रतिष्ठने ।
आवाहने च स्नपने पूजने च विसर्ज्जने ॥
हरादीनि च नामानि महादेवानि कीर्त्तयेत् ।"

पुराणान्तरे— "मृदाहरणसङ्घट्टप्रतिष्ठाह्वानमेव च ।
स्नपनम्पूजनञ्चैव महादेवेति सर्ज्जनम् ॥
ओङ्कारादिनमोन्तेन नाम्ना मन्त्रेण कारयेत् ।"

प्रतिष्ठा-- पूजानुप्रयोगः संस्कारः नतु स्थापनम् । तेनावाहनपूर्वत्वं सङ्गच्छते । स्थापनपर्यन्तमावाहनपदार्थः ।

एवञ्च ओं शूलपाणये नमः, इह शूलपाणे सुप्रतिष्ठितो भव, ओं पिनाकधृजे नमः, ओं पिनाकधृक् इहागच्छ इहतिष्ठ । एतानि पाद्यादीन्यर्घाचमनीयस्नानीयपुनराचमनीयानि, ओं पशुपतये नमः एष गन्धः ओं शिवायनमः, इत्यादिना गन्धाक्षतपुष्पविल्वदलधूपदीपताम्बूलयज्ञोपवीतवस्त्रालङ्कारनैवेद्यानि त्यजेत् । ओं महादेवाय नमः , ओं महादेव क्षमस्व, इत्यष्टमूर्त्तिपूजनं कृत्वा विसर्ज्जयेत् । तच्चोक्तं विष्णुना-

भविष्ये-- "श्रृणुष्व गदतस्सर्वं शिवमन्त्रगणं परम् ।"

ओं शर्वाय क्षितिमूर्त्तये नमः, ओं भवाय जलमूर्त्तये नमः , ओं रुद्रायाग्निमूर्त्तये नमः, ओमुग्राय वायुमूर्त्तये नमः , ओं भीमायाकाश मूर्त्तये नमः, ओं पशुपतये यजमानमूर्त्तये नमः, ओं महादेवाय सोममूर्त्तये नमः , ओमीशानाय सूर्यमूर्त्तये नमः ।

"मूर्त्तयोष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रयोज्यास्तु विद्यां लिङ्गे शिवं यजेत् ॥"

आगमे देवतायाः पूजकस्य वा सन्मुखं पूर्वमित्युक्तम् । तच्च स्मार्त्ते सम्बद्धमनियतञ्च परम् , शिवपूजनोत्तरमावरणपूजात्वात् ।

"यः कृत्वा पार्थिवं लिङ्गमर्चयेच्छुभवेदिकाम् ।
इहैव धनवाञ्छ्रीमानन्ते रुद्रोऽभिजायते ॥"

लैङ्गे--- "कः समाप्नोति वै मुक्तिं लिङ्गार्चनमृते नरः ।"

भविष्ये--"लिङ्गे देवो महादेवः सर्वदेवव्यवस्थितः ।
अनुग्रहाय लोकानां तस्मात्तं वर्ज्जयेत्सदा ॥
यो न पूजयते भक्त्या लिङ्गं त्रिभुवनेश्वरम् ।
न स स्वर्गस्य राज्यस्य न च मोक्षस्यभाजनम् ॥"

स्कान्दे स्कन्दम्प्रति शिववाक्यं स्वधर्मत्यागिनं शूद्रमधिकृत्य-- "तेनाहं पूज्यमानोऽपि गन्धं जिघ्रामि कौणपम् ।" गौरीम्प्रति तु---

"शूद्रधर्मरतेनापि स्पृश्यमानो द्विजन्मना ।
हृष्यामि तेन सुतरां पूज्यमानः सुसुन्दरि ॥"

एवञ्च स्वकर्मस्थः शिवपूजाधिकारी ।

गौतमः- "रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि ।
शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ॥"

शिवादन्यस्य पूजनेदेवीपुराणम्-- "प्राक्पश्चिमोदगास्यश्च प्रातस्सायं निशासु च ।" सायं द्वारोर्ध्वभीत्यादेराशिवन्यां पूजा सन्ध्यान्तर्गताञ्जलिदानरूपा सूर्यपूजा च पश्चिमाभिमुखेन कार्येति केचित् ।

तन्न । द्वारोर्ध्वभित्तेः पूर्वाऽभिमुखगृहसम्बन्धिन्याः साम्मुख्यार्थन्तत्र

पश्चिममुखत्वौचित्येऽपि पश्चिमाभिमुखगृहद्वारभित्तिप्रभृतिस्वनौचित्य-प्रसङ्गाच्चन्द्रपूजनेऽप्यनौचित्यापत्तेः । निकुम्भहुताशनादिपूजनेऽप्याचार-विरुद्धत्वात् सूर्याञ्जलित्यागः पञ्चोपचारादिषु पूजापदार्थ एव न भवति । "तस्मादैन्द्री सौम्याऽपराजिता" इत्यत्र पश्चादभिहितऐशानी सायं पूजा-यामित्यर्थः

यद्वाऽष्टमूर्त्तिपूजायामैन्द्री पश्चादुपात्तेत्यैशान्येवार्थः । प्रातःपद दिनपरम् । रत्नगोमय पाषाणादि शिवलिङ्गपूजा फलादिकमन्यत्र द्रष्टव्यम् ।

कालोत्तरे--- "कालः सदा शिवो देवः कालो वाणासुरोऽपि च ।
तिलतस्मै कृतं तस्माद्वाणलिङ्गमुदाहृतम् ॥
सदा सन्निहितस्तत्र शिवस्सवार्थसाधकः ।
कृतप्रतिष्ठन्तल्लिङ्गं वाणाख्येन शिवेन च ॥"

प्रतिष्ठावाहनस्थापनविसर्ज्जनानि नसन्ति । शिवनारदसम्वादे-- "विप्र-ग्राह्यविचारोयं वाणलिङ्गे न विद्यते ।" तन्नैवेद्यादिकं ग्राह्यमित्यर्थः । अर्घे देवीपुराणम्--

"रक्तविल्वाक्षतैः पुष्पैर्दधिदुर्वाकुशैस्तिलैः ।
सामान्यः सर्वदेवानामर्घोऽयं परिकीर्त्तितः ॥
अभावे दधिदुर्वादिर्मानसं वा प्रकल्पयेत् ॥"

रक्तम् कुङ्कुमं रक्तचन्दनम्वा अक्षतं तण्डुलम् । विल्वं विल्वपत्रम् । अनर्घ्यं तुलसीदलमिति तु स्मरन्ति । बहुत्वं विल्वपत्रादौ दुर्वाकुशयोश्च न प्रत्ये-कम् । द्वन्द्वानन्तरादिभक्त्यर्थं संख्याया मिलित एवान्वयव्युत्पत्तेः ।

अन्यथा धवखदिरादावित्यत्र धवद्वयखदिरद्वयवोधापत्तेः । पुष्पे तिले च बहुत्वं विवक्षितमेव । देवानामित्युद्देश्यलिङ्गस्याविवक्षया देवीनामप्येव-मेवमर्थः । आद्यर्थकबहुवचनेन वास्तुपूजनान्तर्गत निरूतिमार्कण्डेयादि मनुष्यसङ्ग्रहः । पिण्डपूजनाद्यर्थार्घे तु देवविध्यकर्त्तव्ये - गन्ध पुष्प तिल जल-

मात्रम्, रक्तचन्दनादेस्तत्रौचित्याचारयोरभावात् ।

असम्भवपक्षे जलमात्रेणाप्यर्घ इति मिश्राः । तच्चिन्त्यम् - मानाभावात् । मानसदध्यादि कल्पनस्य सर्वत्र सम्भवाच्च । आगमे तु—गन्धाक्षत पुष्प यव-कुशान् तिल सर्षप दूर्वाः । अर्घे दूर्वाब्ज विष्णुक्रान्ताः । पाद्ये —जाती लवङ्ग कल्लोलानि । आचमने—जले देयानि, शुद्धजलं पुनराचमने लिखितम् । तच्चा-गमकल्पे पूजायाम् । अर्घो विशेषो—

भविष्ये—"आपः क्षीरं कुशाग्राणि तथा दधि घृतं मधु ।
रक्तानि करवीराणि तथा रक्तञ्च चन्दनम् ॥
अष्टाङ्ग एष अर्घो वै ब्रह्मणा परिकीर्तितः ॥"

दुर्गापूजामधिकृत्य--

भविष्ये--"आपः क्षीरं कुशाग्राणि अक्षतं दधि तण्डुलाः ।
महासिद्धार्थदूर्वाकं कुङ्कुमो रोचना मधु ॥
अर्घोऽयं कुरुशार्दूल द्वादशाङ्गमुदाहृतम् ॥"

अर्घपात्र--

देवीपुराणे--"षट्त्रिंशदङ्गुलं पात्रं प्रथमं परिकीर्तितम् ।
मध्यमन्तु त्रिभागोनं कनिष्ठन्द्वादशाङ्गुलम् ॥
वस्वङ्गुलविहीनन्तु न पात्रङ्कारयेत्क्वचित् ।"

वस्विति-- अष्टेत्यर्थः ।

आरोहपरिणाहाभ्याम्पात्रम्वेष्टकर उक्ता षट्त्रिंशदङ्गुल्य परिमाणतयै-तदत्रसेवयम । नतु दैर्घ्यपात्रपरिणाहमात्र इति सुवचत्वात् । न वा दैर्घ्य-परिणाहयोः प्रत्येकमङ्गुलं विधिवाक्यभेदप्रसङ्गात । किञ्च राज्ञामपि षट्-त्रिंशदङ्गुलदीर्घन्तावद्विस्तारकम्वा अर्घपात्रमाचारानुसारीत्याभाति ।

हारीतः—"गन्धादिकानि वेद्यान्ता पूजा पञ्चोपचारिका ।
अर्घपाद्याचमनीयं मधुपर्काचमनीयकम् ॥

गन्धादिपञ्चकञ्चैते उपचारदशोदिताः ।
आसनं स्वागतञ्चार्घपाद्ये चाचमनीयकम् ॥
मधुपर्क्काचमनस्नान - वसनाभरणानि च ।
गन्ध पुष्पे धूपदीपौ नैवेद्यं चन्दनन्तथा ॥
आसनावाहने चार्घं पाद्यमाचमनीयकम् ।
स्नानं यज्ञोपवीतञ्च भूषणानि च सर्वशः ॥
पुष्पं गन्धस्तथा धूपं दीपमन्नेन तर्पणम् ।
माल्यानुलेपनञ्चैव नमस्कारविसर्ज्जने ॥"

अत्र पञ्चोपचार दशोपचार षोडशोपचाराष्टादशोपचाराश्चत्वारः कल्पाः—उत्तरोत्तर साधक फलाः । तत्राद्ययोर्न्नैवेद्यं शेषे देयम् । निवेद्यान्ते-त्यभिधानात् । ताम्बूल यज्ञोपवीतादि किञ्चिदान मन्त्यकल्पद्वयासम्पत्तिस्थले नैवेद्यात्प्रागेव देयम् । "वस्त्रोत्तरं गन्धपूर्वमिति" कथनाच्छ्राद्धे बस्त्रात्प्रागिव-अन्त्ययोरपि कल्पयोर्गन्धादि पञ्चकानां मध्ये नैवद्यमेव शेषेदेयम् । पाठक्रमा-दन्यानि च क्रमादेव देयानि ।

आचमनं पुनराचमनीयम् चन्दनम् हस्ताद्यङ्गेष्वनुलेपनम् । तदेव चाष्टादशोपचारेऽनुलेपनपदार्थः । गन्ध सुरभिद्रव्येण तिलकरूपः, स च गन्ध-पदेनोल्लिख्यैव देयः । अनुलेपन पदेनोल्लिख्यदानम् । पञ्चोपचार दशोपचार कल्पयोस्तु विशेषादर्शनाऽलकम् । अतएवैष गन्धः शिवाय नम इत्येव प्रयोगं लिखन्ति शिष्टाः ।

त्यज्यत इत्यर्थकेन च नमः पदेनाभिहितत्वाद् गन्ध इति प्रथमा । गन्धान-न्तरमक्षतं प्रयच्छन्ति तत्र मानम् पारणाद्यङ्गब्राह्मणभोजनपूजाया गन्धा-क्षतकरणत्वदर्शनं क्रमदीपिकायां सलिलसुगन्धाक्षतसुमनोभि र्यजेदिति चतु-र्थपटले वचनम् - "वह्नावभ्यर्च्य गोविन्दं शुक्लपुष्पैः सतण्डुलैः।"

इति सप्तमपटलेऽभिधानञ्च गन्ध दूर्वाक्षतादिभिरितिहरिभक्तिनिबन्ध लिखितवचनञ्च । एवं पञ्चोपचचार गन्धपदेनाक्षतस्याप्युपग्रहः । नाक्षतै-रर्चये द्विष्णुमिति नैवेद्यपरो निषेधः । अर्घगन्धाक्षत शंख पूजाजपस्थानपूज-

नेषु तण्डुलविधिः। नैवेद्य-क्रमदीपिकायां द्रव्यान्तरस्यैव विधानात्। शालग्रामपूजायाम्-गन्धाक्षत निषेधपरो वा। शालग्रामे तण्डलसंयोग निषेधाच्च। देवान्तरस्य गन्धोत्तरं नैवेद्यतया चाक्षतन्देयम्। पुष्पेऽपि इदं पुष्पम्, एतानि पुष्पाणीति वोल्लिख्य दानम्। तदनुल्लिख्यैव भ्रान्तानां पुष्पदानाचरणम्। गन्धपुष्प दानानन्तरम्पुनर्गन्धपुष्पादिदानञ्च। नैवेद्येन सह भ्रममूलकमेव। तद्दानेनैव पञ्चोपचारादिसिद्धिः। आवृत्तौ माना-भावात्। अतएव कृष्णाष्टमी पूजने रुद्रधरोपाध्यायैः धूपदीपताम्बूलनैवे-द्यानीत्येव प्रयोगो लिखितः। तुलसीविल्वपत्रादीनामपि पुष्पपदेनोल्लिख्य दानम्। तद्दानेनैव पञ्चोपचारादि सिद्धिः।

"एवं पुष्पविशेषेण फलं तदधिकं नृप।
ज्ञेयम्पुष्पान्तरज्ञेन यथा स्यात्तन्निरोधने॥"

इत्युपक्रम्य—

"शमीपुष्प सहस्रेभ्यो विल्वपत्रं विशिष्यते।
विल्वपत्र सहस्रेभ्यो वकपुष्पं विशिष्यते॥"

इति नरसिंहपुराणे पत्रपुष्पयोरविशेषप्रतिपादनात्। अतएव तुलस्याः पुष्पत्वेनार्घे प्रेतश्राद्धे च दानन्निषिद्धम्। पत्रमञ्जरीसाधार-ण्येन-

"अपर्युषित निश्छिद्रै स्तथान्यैर्ज्जन्तुवर्ज्जितैः।
आत्मारामोद्भवै र्वाऽपि पुष्पैः सम्पूजयेच्छिवम्॥
पारक्यारामजातैस्तु कुसुमैरर्चयेत्सुरान्।
तेन पापेन लिप्येहं यस्यैतदमृतम्भवेत्॥"

इति नारदीये राक्षसांश पथगम्यो निषेधः।

वाराहे—"अदत्त्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति।
मृतोऽसौ जायते भूमि यातुधानो न संशयः॥
याचितन्निःफलं पुष्पं क्रयक्रीतञ्च निष्फलम्॥"

अभिवाद्याभिवादक हस्तस्थितञ्च त्याज्यमग्रभागत्यागप्रोक्षणाभ्यान्तूपादेय-मिति निषेधप्रतिप्रसवौ।

"स्नानङ्कृत्वा तु यो मोहात्पुष्पञ्चिन्वन्ति वै द्विजाः।
देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत् ॥"

इति स्नानानन्तरचित पुष्पविषयको हारीतनिषेधः। पत्रगोचरोऽपि अवर्ज्यं तुलसीदलमिति पर्युषितनिषेध प्रतिप्रसवोऽपि तुलसीमञ्जरी कथिता-ख्यांबाध निषेधो मञ्जरीफललतासाधारणाः।

पुष्पाणामप्यलाभे तु पत्राण्यपि निवेदयेत्।
पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ॥
फलानामप्यलाभे तु तृणगुल्मौषधीरपि।
लताभि र्ब्रह्मवृक्षस्य दूर्वाङ्कुरैश्च कोमलैः॥"

मञ्जरीभिः कुशानाञ्च विल्वपत्रैः सुशाभितैः।" इति भवष्यिपुराण वचनम्। सर्वेषां पुष्पप्रतिनिधितया हि तद्धर्मप्राप्तिं बोधयति। एवञ्च देवतार्थं कुशुमस्तेयं मनुरब्रवीदिति - नित्यपूजायाञ्चौर्याभ्यनुज्ञा मन्तकारो शस्त्र देवानामुपरिघृतत्वस्यान्तर्ज्जलक्षालितस्य च निषेधश्च पत्र-फल मञ्जर्यौषधि साधारण्तामाप्नोति। पुष्पैरितिकपिञ्जलन्यायात्त्रित्वपर-मिति तु भ्रमः, यथालाभमित्यनापात्, प्रतिमाच्छादनबोधनात् कपिञ्जलन्या-यस्यानध्यवसायमूलत्वाच्च। पुष्पालाभे फलातिशयहीनम्पत्रन्न ग्राह्यमलाभं विधानात्। पर्युषितान्यपि पत्र पुष्पफल लतादीनि मालाकारगृहस्थितान्यदृ-ष्टानि पुष्पत्वेन दाने श्राद्धेऽपि तुलसीपत्रप्रसंसनात्पुष्पत्वेन तद्देयम्।

पाद्मे—"न गणेशं तुलसीपत्रै दुर्गान्नैव च दूर्वया।
अर्क्कजैष्कर्णिकारैश्च नाक्षतै र्विष्णुमर्च्चयेत् ॥"

शातातपः—'शिवे विवर्ज्जयेत्कुन्दमुन्मत्तञ्च तथा हरे।
देवीनामर्क्कमन्दरौ सूर्यस्य तगरन्तथा ॥
पद्मपुष्पैर्हरिस्तुष्टो धुत्थुरेण हरस्तथा ।

देवी तुष्टा यवापुष्पैः करवीरैश्चापराजितैः ॥
प्रादुर्भूतं यथापुष्पं तथा दत्तङ्क्रमेण च ।
सर्वकामार्थसिद्धयर्थं विल्वपत्रमधोमुखम् ॥"

नारदीये—"शुष्कैः पर्युषितैर्वाऽपि विल्वपत्रैस्तु यो नरः ।
पूजयेत्तु महादेव मुच्यते सर्वपातकैः ॥
सर्वम्पर्युषितं वर्ज्यम् पत्रं पुष्पं फलं जलम् ॥
अवर्ज्यञ्जाह्नवीतोयमवर्ज्यन्तुलसीदलम् ॥"

पत्रं लताया अन्वादेश्च । दलन्तु मञ्जर्या अप्युपलक्षणम् ।

स्मृतिः—"तुलस्यागस्त्यविल्वानाम् पद्मस्य कुमुदस्य च ।
पत्राणामिह देवादौ नास्ति पर्युषिता मता ॥"

पठन्ति च—पुष्पाणि चैव देयानि निषिद्धान्यपि मालया ।"

मालाकार गृहस्थित पुष्पमिव ताम्बूल दलं विक्रेतृस्थितम् फलञ्च तादृशमदुष्टम् । आम्र कदलीफलादिकञ्च पर्युषितत्वेनोत्कर्षवत्वाददुष्टम् । यथा श्राद्धे उष्णविधावपि शीतलतयोत्कर्ष प्राप्तं शाकादीति प्रतिभाति । पर्युषितत्वं गृहावस्थित्यनन्तरसूर्योदयसम्बन्धः, पूगफलत्वेन व्यवह्रियमाणन्तु न फलम् । किन्तु त्वगादि विशिष्टञ्च पर्युषितमप्यदुष्टमेव । एवं नारिकेरेऽपि बोध्यम् । घृतपक्वं स्नेहाक्तञ्चान्नादि अदुष्टम् । एवं परगृहपर्युषितजलमप्यन्येन विनियुज्यमानं ताम्बूलदलमिव विक्रेतृगृहस्थितमुपादेयमेव पर्युषितलक्षणशून्यत्वात् । पटोलक दलादि व्यञ्जनेषु तु पाकानन्तर सूर्योदय सम्बन्ध एव पर्युषितत्वं व्यवहारसिद्धमिति - पूर्वदि स्वगृहस्थापितमपि नैवेद्यं श्राद्धादौ उपादेयमेव पाकार्थमेकहस्तसाध्य उपचारः । परिणाषाबला दक्षिणहस्ते कार्य । पुष्पाञ्जलिदानशिवलिङ्गचटनवस्त्रपरिधापनावाहनस्थापनमुद्राप्रदर्शनबीणावादन नमस्कारादिकं हस्ताभ्याम्, प्रदक्षिणपरिक्रमः पद्भ्याम्, दण्डवत्प्रणिपात प्रभृतिरङ्गैः स्तुतिगीत मुखेन, नृत्यं पादादिना कार्यम् । यौ तत्पूजाकरौ करावित्यभिधानात् ।

"यजनकराभ्यां यज्ञेशमिति" वचनाच्च ।

तथाचोक्तम्—

भागवते– वीणेरुतोरुक्त मविक्रमस्यन्येन शृण्वतः कर्णपुटे नरस्य ।
जित्वाऽसती दार्दु रिकेसु तनयो पापायप्ररुगाथाः ।।
भाव. परं पदकिरीट जुष्टमप्युत्तामाङ्गन्न नमन्मुकुन्दम् ।
शावौ करौ नोत्कुरुतः सपर्यां हारेण सत्काञ्चनकङ्कणौ वा ।।
वर्हाभिते ते नयनेनवाणम् लिङ्गानि विष्णो र्न्न निरीक्षतो मे ।
पादौ नृत्यन्तौ द्रुमजन्म भाजौ क्षेत्राणि नानुव्रजते हरेर्य्यौ ।।"

भागवते वा प्रामाण्यशङ्काऽपि पाठाशक्ताः । पिशाचा हरिहरोपासक श्रीधरस्वामिभि रपहृतप्र ाणानात्र पूर्वपक्षाचरणक्षमाः ।

पुष्पविशेषाणां देवदेवीविशेषे निषेधः । फलाधिवयञ्च ग्रन्थान्तरसिद्धम् । विस्तरभायान्नेह लिखितम् । नित्यपूजा चाशक्तस्य पुष्पमात्रेण । "विना-पुष्पेण या पूजेति" निषधात् । अशक्ततरस्य जेलेनैव । अशक्ततमस्य तु मानस-पञ्चोपचारकल्पेन । दर्भहीना मानसी वा यथा सन्ध्येति मन्तव्यम् । नैवेद्ये-

विष्णुः– "नाभक्ष्यं नैवेद्यान्यभक्षेष्वप्यजामहिषीक्षीरे पञ्चनखमत्स्य-वराहमांसानि ।" प्रकरणाद्विष्णुपरमिदम् । अनिवेद्य न भुञ्जीतेति भोक्तव्य-सकल वस्त्वग्रेभाग दानम्प्रति भोजने विहितम् । यद्भगवन्नैवेद्यतया - तदजा-महिषीक्षीरतद्विकारादिभिन्नपरम् । तेन - महिषीक्षीरादिकम्भगवतेऽनिवे-द्यैव भोक्तव्यम् । भक्ष्यमित्युपक्रमात् । नतु तदभोक्तव्यम् एव । भगवते दत्वा भोक्तव्यम्वेतिभ्रमः । सूर्याय निवेदितं शिवाय दत्तं भस्माङ्गेभ्यो, दुर्गायै दत्तंस्त्रीभ्यो, विष्णवेदत्तं सात्वतेभ्यो वा दद्यात् ।

आग्नेये –"शालिप्रस्थाचा प्रस्थस्य सुपक्वान्नकृतस्य च ।
अर्द्धम्विप्राय दातव्यम् अर्द्धमात्मनि योजयेत् ।।"

एतेन स्वदत्तविष्णुनैवेद्यभक्षणं विहितम् ।

हरिभक्तौ –"सिक्थे सिक्थे भवेत्पुण्यमश्वमेधशताधिकम् ।

भुक्तमित्यन्वेति ।

लैङ्गे—"पीतं येन सहायेन शालग्राम शिलाचलम् ।
सर्वपाप विनिर्मुक्तो विष्णुलोकं स गच्छति ॥
शालग्रामशिला तोयै र्योऽभिषेकं समाचरेत् ।
स स्नातः सर्वतीर्थेषु स यज्ञषु च दीक्षितः ॥"

इदञ्च दृष्टा - येन स्नापिता तथा सम्पूजिता स्तुतेत्युपक्रम्येत्युक्तमतः स्वत्यक्त जलपानाऽभिषेकौ द्रढयति । अत्र शालग्रामपूजा तदुपरि शङ्खभ्रामणादिकञ्चानन्ततया सहस्रमुख शेषनाग वचनायोग्यमेकमुखेन वक्तुमशक्यम् । किञ्च द्विजाह्निकयो र्द्रष्टव्यमेवेति मया न लिखितम् । शालग्रामपूजा च विकर्मस्थेनापि कर्त्तव्या । तदुक्तम्—

"कामाशक्तोऽपि कुपितो शालग्रामशिलार्च्चनम् ।
भक्त्या वा यदि वाऽभक्त्या सोऽपि मुक्तिमवाप्नुयात् ॥"

शूद्रसाधारणञ्चेदम्—

"भूमावप्सु तथाऽग्नौ च शालग्रामशिलात्मकः ।
सर्ववर्णैरहम्पूज्यः शिलां शूद्रो न संस्पृशेत् ॥"

इति वचनात् "स्त्री शूद्र करसंस्पर्शो वज्रादपि सुदारुणः ।"

इत्यपि संस्पर्श निषेधः । तस्माद्विना स्पर्शमेव स्त्रीशूद्राभ्यां शिलाः पूज्याः ।

नारसिंहे—"ब्राह्मणीक्षत्रियावैश्याः स्त्रियः शूद्रान्त्यजातयः ।
सम्पूज तं सुरश्रेष्ठं भक्त्या सिंहवपुर्द्धरम् ॥"

अत्र सूर्यपूजामुपक्रम्य पुष्पैरित्युपक्रमे—

भविष्ये—"केशकीटोपविद्धानि शीर्णपर्युषितानि च ।
स्वयं पतित पुष्पाणि त्यजेदुपहतानि च ॥
मुकुलैर्न्नार्च्चयेद्भानुमपक्वन्न निवेदयेत् ।
फलङ्क्वथित विद्धञ्च कालापक्वमपि त्यजेत् ॥"

लिङ्गपुराणे तु देवीपुराणीयश्लोकद्वयं देवीपदस्थाने देवपदत्वन्दत्वा पठितम् वहुषुस्थलेषु निषेधात् एते परिभाषारूपा इति देवतान्तरमनुष्यादिपूजायां श्राद्धादौ परिधानभोजनादौ च सावकाशाः। क्वथितमग्निपक्वं जलमध्य इत्यंशः, क्वथित पदार्थेऽविवक्षितः। यत्नपक्वमपि त्यजेदित्यन्यत्र दर्शनम्। तेषु नोऽग्निधूपरूपः।

सङ्ख्यापरिमाणे—

"यत्नपक्वमपि ग्राह्यं कदलीफलमुत्तमम्।"

अत्र यत्नो धूपोपरिस्थापन गर्त्तादिनिःक्षेपरासकपराद्याच्छादनरूपः। उत्तमपदेन - रसोत्कर्षस्याभिधानात्। हेतुगर्भञ्च तद्विशेषणमिति पनसलकुचादिकमिति तादृशङ्ग्राह्यमित्यायाति। कालापक्वं - समुचितपाकसमयपक्वव्यतिरिक्तं विद्धङ्कटकादिना व्यञ्जनस्याग्निपक्वता नियमात्तद्भिन्नतया कदली पनस कर्कटयादेरपक्वस्य कालापक्वस्य वा निषेधः। अपक्वाम्रचूर्ण तिन्तिल्यादेरपि पक्वतापन्नस्य व्यञ्जनोपकरणत्वादनिषेधः।

सिद्धान्नन्तु वैश्वदेवानन्तर रात्रिपूजायामेव निवेद्यम्। पाकादग्रमुद्धृत्येति विष्णुसूत्रम् - कठशाखिनामेवाग्रोद्धरण प्रयोगान्तर्गतमाहेत्यन्यै वैंश्वदेवार्थमग्रमुद्धृत्यसिद्धान्नेन नैवेद्यङ्कार्यम्। भिक्षवे विश्वदेवपूर्वागताय भिक्षादानवत्। वस्तुतस्तु - नोद्धृत्येत्यत्राव्यवधानमर्थः। "उद्धृत्य वैश्वदेवार्थं भिक्षान्दत्त्वा विसर्ज्जयेत्" इति वचन स्वरसात्।

किञ्च - वैश्वदेव निषिद्धो यज्ञार्था न्निवर्त्तत इति गोभिल विष्ण्वर्थक पाके कृत इति पाकान्तरे वैश्वदेवाद्यर्थकेऽग्रोद्धरणङ्करिष्यमाणे विष्ण्वर्थक सिद्धान्नेनतु नैवेद्यं युक्तम्।

विष्णुः—"नचापक्वन्न निवेदयेदिति निषधे वैश्वदेवानन्तरमिति शेषे इति।" तदा सिद्धान्नेन नैवेद्यन्नेति वाच्यम् शेषपूरणे मानाभावात्। फलङ्क्वथितविद्धञ्चेत्यभिधानेनापक्वनिषेधस्य फलपरत्वाच्च। शूद्रस्य च नैवेद्यं पाकयज्ञश्चामान्नेनैव पक्वमुच्छिष्टमुच्यत" इति निषेधात्। मांस-

मप्याममेव देयम् विध्यविशेषात्। ब्राह्मणानामाम मांसस्यभक्षणनिषेधेऽपि संस्कृतस्य भक्ष्यत्वात्। ना।दीयेन जुहोतीति निषेधस्तूक्तकालमदनयोग्यं स्पृशति। अतएव प्राच्यानान्तथाचारः।

वस्तुतस्तु—"पाकयज्ञं विगृह्यत" इति वचनात्ते पक्वान्नेन कार्या इति तत्त्वम्। एवञ्च शूद्रेण तु सदैव हीति आमान्ननियमो नित्यश्राद्धान्यपरः। यद्यपि—

"एकपाकेन वसतां पितृदेवद्विजार्च्चनम्॥
एकम्भवेद्विभक्तानां तदेवस्याद्गृहे गृहे॥"

इत्यविभक्तकनीयसां पूजानिषेधोस्ति। तथाऽपि—

"पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजातिनाम्।
अग्निहोत्रन्द्विजार्च्चा तु नित्यं सन्ध्या भवेत्ततः॥

इति वचनमाश्वलायनीयकम्। तेन कृष्णाष्टमी शिवरात्रादिपूजा च कर्त्तव्या। निषेधस्तु सावकाश नागपूजन कोजागरी सुखरात्रि पूजादि विषयक इति। प्रतिमादि लक्षण तत्पूजनफल विशेष निर्माल्य प्रक्षेपणम् धनदोषादयोऽन्यत्र विस्तृता इह न प्रस्तूयन्त इत्युपरम्यते।

वैष्णवानां विष्णुप्रतिमापूजाधिकृतानाञ्चापराधा द्वात्रिंशदुक्तास्तत्र—

स्कान्दे—"अहन्यहनि यो मर्त्यो गीताध्यायन्तु यः पठेत्।
द्वात्रिंशदपराधैस्तु अहन्यहनि मुच्यते॥"

यस्मिन्नहनि अपराधस्तस्मिन् गीताया एकमध्यायम्पठित्वा मुच्यत इत्यर्थः। विष्णुपूजामुपक्रम्य—

विष्णुः—वासो न नीलरक्तन्दद्यादित्यनुषङ्गः।

हारीतः—"नीली रक्तं यदा वासो ब्राह्मणोङ्गे निधापयेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥
कम्बले पट्टसूत्रे च नीलीरागो न दुष्यति।

स्त्री धृता शयने नीली ब्राह्मणस्य न दुष्यति ॥

"नृपस्य वृद्धौ वैश्यस्य पर्वण्येवं विधारणम् ॥"

भविष्ये—"स्नानन्दानन्तथाहोमः स्वाध्यायः पितृतर्पणम् ।
वृथा चास्य महायज्ञा नीलीवस्त्रस्य धरणात् ॥"

रक्तनीलवस्त्रं धारयतां भगवत्पूजनमपि--वराहेऽपराधमध्ये गणितमित्यभिहितम् । प्रकीर्णके—

आग्नेये—योऽग्रपीठं समभ्यर्च्य समाराध्य हरिं यजेत् ।
पाद्यार्घाचमनीयञ्च पीतवस्त्रविभूषणम् ॥
एतत्पञ्चोपचारञ्च सर्वमूलेन साध्यते ।"

मूलेन चतुर्थीनमोन्तेन प्रणवादिना नारायणात्मकमन्त्रेण ।
स्कान्दे—"गीतं वाद्यञ्च नृत्यञ्च तथा पुस्तकवाचनम् ।
पूजाकाले तु विप्रेन्द्र सर्वदा केशवप्रियः ॥
नृत्यगीताद्यभावेऽपि कुर्यात्पुस्तकवाचनम् ।
पूजाकाले मुक्तिदस्य गीताध्यायमनुस्मृतम् ॥
पञ्चस्तवं महाराज महाप्रीतिकरं हरेः ।
स्तोत्राणां परमं स्तोत्रं विष्णोर्नामसहस्रकम् ॥
हित्वा स्तोत्रसहस्राणि पठनीयं महामुने ।
तेनैकेन मुनिश्रेष्ठ पठितेन सदा हरिः ॥
प्रीतिमायाति देवेशो युगकोटिशतानि च ।
विहाय गीतवाद्यानि पूजाकाले सदा हरिः ॥
परिपूर्णो भवत्याह सहस्राख्यानकीर्त्तनात् ।
विष्णोर्नामसहस्राख्यं कलिकाले विशेषतः ॥
वेदानामप्यबालानां फलमाप्नोति मानवः ।
श्लोके नैकेन देवर्षे पठितेन सदा हरिः ॥
सहस्राख्येन देवर्षे न तत् क्रतु शतैरपि ।
रात्रौ यः कुरुते गानं द्वादश्यां जागरे स्थिते ॥

तस्मिन्वंशे च यो जातो नारकीयो भवेन्न हि ।
भार्यापक्षे च ये जाता मातृतः पितृतस्तथा ॥
तारयेत्तान्न सन्देहः प्रबोधन्यान्तु जागरे ॥"

पुस्तकवाचनम्—पुराणश्रवणं तत्पाठश्च । पञ्चस्तवं गीत-नृत्य-वाद्य-पुस्तकवाचन गीताध्यायपाठपञ्चकसहितं सहस्रनामस्तोत्रम् । शूद्रःसुखमवाप्नुयादिति फलश्रुतेः शूद्रोप्यप्यत्राधिकारी । अतएव शूद्राचारे मिश्रैरिदं लिखतम्-महाराजेति तपोराजमानेत्यर्थः, सहसा राजमानेति वाऽर्थः । यद्वा-महाराजस्य-युधिष्ठिरस्य महाप्रीतिकरमित्यर्थः । विहायानादृत्य कीर्तनात्पूर्णं सर्वम्भवति इत्याह—हरिः । गानं-स्तोत्रस्य, गीतस्य वा, पक्षः मातृ-पितृपक्षयोः मातृपितृवंशयोरित्यर्थः ।

शङ्खः—"अहरहः पञ्चयज्ञान्निर्वपेदापत्रशाकोदकेभ्यः ।"
मनुः—"स्वाध्यायेनार्च्चयेदृषीन् होमैर्देवान् यथाविधि ।
पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा ॥"

शूद्रइत्यनुवृत्तौ—

याज्ञवल्क्यः—"भार्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥"

पञ्चेति—पाकसाध्यानित्यर्थः । पचधातोरिदं सिद्धयति वर्णागमो वर्ण-विपर्ययश्चेति वचनात् ।

"सायम्प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च ।
अनश्नताऽपि सततमन्यथा किल्विषी भवेत् ॥

अन्यत्रेहापि च पाठक्रमात् । "भूतेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं-हरेत्" इति वचनाच्च वैश्वदेवानन्तरं बलिः । वैश्वदेवश्चनान्न संस्कारकः, माना भावात् ।

आर्याः प्रयतावन्नसंस्कारका इत्यापस्तम्बवचनमन्नपाचकत्वम्प्रयताना-म्बोधयति, नतु वैश्वदेवस्य सिद्धान्नसंस्कारकत्वम् । अतएवाकृते वैश्वदेवे

श्राद्धं सिद्धान्नेन युज्यते । अवैश्वदेविक पाकान्ननिषेधः भोजनप्रकरणीयो-वैश्वदेवविमुखस्वामिकान्न विषयकः । "नात्मार्थम्पाचयेदन्नमिति" निषिद्ध-पाकान्नपरो वा सायं रात्रौ प्रातर्विनेति । विष्णुपुराणे—

"पुनः पाकमुपादाय सायमप्यवनीपते ।
वैश्वदेव निमित्तन्तु पत्न्या सार्द्धम्बलिं हरेत् ॥"

तत्रापि श्वपचादिभ्यस्तथैवान्नापवर्ज्जनम् । पुनःपाकाभावे तु नेदङ्कार्यम् । पत्न्यासार्द्धमिति पाककरणेन सहावस्थानेन च साहित्यम् । न स्त्री जुहुयान्नानुपेत इति वचनेन वैश्वदेवहोमे पत्न्या अनधिकारात् । "सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रम्बलिं हरेत्" इति वचनन्तु साग्निपति वैश्वदेवबलिमात्रम्पत्नीकर्तृकम्बोधयति ।

"विदेशस्थो निरग्निश्च स्वयं प्रागस्विष्टपूज्यः ।
पूजयेच्च ततो वह्निम् दद्याच्चाहुतयः क्रमात् ॥"

इति मार्कण्डेयात् । होमस्त्वार्द्रामलकमितान्नेनेत्युक्तम् । प्रकीर्णके बलिरप्येवम् । छन्दोगानान्तु पाण्याहुतिर्द्वादशपूर्विकेति छन्दोगपरिशिष्टात् । अत्रैवमाचारवाद्धर्या बलयोभवन्ति महामार्ज्जारश्रवणप्रमाणात् । तथा—

अमुष्मैनमः इत्येव बलिदानम्विधीयते ।
"स्वधाकारेण निर्वपेत्पित्र्यं बलिमता सदा ।
तमप्येकेन संस्कारैः कुर्वते नेति गौतमः ॥"

एके वाजसनेयिनः । स्त्री शूद्राश्च गौतम इति छन्दोगपरम् । स्वधा नम इति समुदितङ्कं नापि प्रयोज्यम् । समुच्चयबोधकाभावात् । पित्र्यत्वादपसव्यं यश्च न बलिस्तूपवीति देय एव पारस्करेणानन्तरमभिहितः ।

गोभिलः—"यद्येकस्मिन्काले पुनः पुनरन्नम्पचेत् । सकृदेवैतद्बलितन्त्रङ् कुर्वीत" । अविभक्त कनिष्ठ भ्रात्रादीनभिप्रेत्याह—दस्यत्वेषादग्रतोऽन्नं सिद्धयेत्स निह्नुतमेवाग्नौ हुत्वा ब्राह्मणायाग्रन्दत्त्वा भुञ्जीत । निहनुतं वैश्वदेव

मन्त्रहीनम् । इदञ्च दत्वेत्यत्राप्यनुषज्यते । तेन अन्त इत्यभिधानहीनत्वं लभ्यते । अविभक्ते ज्येष्ठस्य तत्राधिकारात् । वार्षिकपार्वणादिश्राद्धदिने तदनन्तरं कृत्ये वैश्वदेवबलिकर्मणी काम्यबलिशून्ये कार्ये—

"निवृत्य प्रणिपत्यार्थ पर्युक्ष्याग्निं समन्त्रवित् ।
वैश्वदेवम्प्रकुर्वीत नैत्यकं बलिमेव च ॥" इति वचनात् ।

दिनान्तरे षट्पुरुषश्राद्धान्तरमकृतवता नित्यश्राद्धात् प्राक् काम्यबलिसहितेऽपि ते कार्ये देवभूतपितृब्राह्ममनुष्याणामनुक्रमात् । महासत्राणि जानीयात्त एव हि महामखा इति छन्दोगपरिशिष्टात् । ननु चार्वाक् तर्पणादित्युक्तकालकब्रह्मयज्ञभिन्ने क्रमपाठात् ।

अतएव – "पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विज ।"
इति वचनाच्च । नित्यश्राद्धान्तरमेव मनुष्ययज्ञः ।

"अष्टमुष्टिर्भवेत्कुञ्चिः कुञ्चिरष्टौ तु पुष्कलम् ॥"

तच्च पितृमनुष्ययोरन्वेति । "अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि ।" अन्नपदमेव जलादिना श्रवणेऽपि प्रयोज्यम् , श्रुतत्वात् । अदनीयत्वेन चार्थसङ्गतिः । षट्पुरुषनित्यश्राद्धाशक्तौ तु पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेदिति वचनान्मिलितोद्देश्यकं नित्यश्राद्धम् ।

ऐष्म बल्यनन्तरमुद्धृत्याग्रं ब्राह्मणायावनेजनन्दद्यादिति पारस्करवचनं जीवत्पितृकविभक्तपरम् , नतु नित्यश्राद्धमनुष्ययज्ञयोः । पश्चात्काम्यबलिर्द्वय इति क्षुद्रमति रुद्रधरोपाध्याय वचसि श्राद्धानुबन्धोविधेयः । नैकस्मिन्कर्मणि तत्रैककर्मण्यत्तायते यत् इति छन्दोगपरिशिष्टे बलिमध्ये तयोः करणनिषेधात् । अवनेज्य प्रोक्ष्य हन्त इति इदं मनुष्याय हन्त इत्यभिधाय मनुष्यतीर्थेनोदङ्मुखो निवीती दद्यादित्यर्थः । प्राङ्मुखं भोजयेदतिथिं मनुष्यार्थ इति गृह्यान्तरम् ।

मनुष्यतीर्थेन निवीती मनुष्यायेत्युद्देश्यात्ति भोक्तव्यमन्नं सङ्कल्पयेदिति तदर्थः । एवञ्च ब्राह्मणायेति पदश्रुतमपि न प्रयोज्यं पुंफलादिकम् । भिक्षायां

वा सङ्कल्पयेदुदङ्मुखः। पूर्वकल्पेऽपि उदङ्मुखत्वं नित्यश्राद्धं पितृणाञ्च मनुष्यैः सह गीयत इति ब्रह्मपुराणाच्च। नित्यश्राद्धप्रयोगान्तर्गत तदव्यवहित-कर्मान्तरम्वा सनकादिश्राद्धं मनुष्ययज्ञ इति तृतीयः पक्षः। तत्सहत्वेनान्वया-दप्रधानत्वेन षट्पुरुषश्राद्धानन्तर्यकथने च शेषे पतति। वाक्यञ्च प्रागिव सनकादिपदं चाश्रुतत्वादप्रयोज्यम्, प्राचीन्देवा अभसन्तु दक्षिणां पितरः प्रतीचीम्मनुष्या इति श्रुतेस्तु पश्चिमाभिमुखत्वं मनुष्यश्राद्धकार्हः। अतएव—"मुनिभिर्द्विरशनम्वक्ति विप्राणां मर्त्यवासिनाम्।" नित्यमित्यत्रातिथिसनका-द्योर्वारणाय मर्त्यवासिनामित्युक्तम्।

अन्यथा - मनुष्ययज्ञप्रकरणे तद्वाक्यं छन्दोगपरिशिष्टसङ्गतमापद्येत। अतएव गृह्योक्तत्वादग्राह्यदानं परिशिष्टोक्तत्वाच्चातिथिभोजनं प्रथमः कल्पः। तयोश्च द्वितीयोऽधिकसाध्यत्वा दुत्तमोत्कृष्टतरब्राह्मणोद्देश्यत्वात्सनकादि-श्राद्धं मध्यमः। किञ्चिदन्नदानं ह्युपायाससाध्यत्वादधमः।

शातातपः—"भिक्षाम्वाप्यकुलम्वाऽपि हन्तकारमथापि वा।
असम्भवे सदा दद्यादुदपात्रमथापि वा॥"

मार्कण्डेये—"ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम्।
अग्रञ्चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः॥
भोजनं हन्तकारम्वा अग्रं भिक्षामथापि वा।
अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः॥"

अग्रमेव प्रागभिहितञ्च पुष्कलं भोजनादित्रयं प्रथमकल्पे भिक्षा तु तृतीय-कल्पेऽन्तर्भवति - इति विवेक्तव्यम्। अतिथि - यती ब्रह्मचारी गृहस्थः शूद्रा-द्याश्चाण्डालादिश्च।

विष्णुपुराणे—"दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम्।
स्वेच्छया च बुधो दद्याद्विभवे सत्यवारितम्॥"

वानप्रस्थस्य ग्रामागमविरहादगणनम्। यद्वा ब्रह्मचारिपदेनैव योगेनोप-ग्रहस्त्रितय इत्याश्रयत्रयपरम्।

नारसिंहे—"अकृते वैश्वदेवे तु भिक्षौ च गृहमागते ।
उद्धृत्य वैश्वदेवार्थम्भिक्षान्दत्वा विसर्जयेत् ॥"

भिक्षादिति - ब्रह्मचारिणो वानप्रस्थस्याप्युपलक्षकम् । यदि भोजनादेर्मनुष्ययज्ञत्वे वैश्वदेवपूर्वकालोङ्गं विधीयते क्रमान्तरन्त्वर्थत सिध्यति, इदमत्राकूतम् - अतिथेरनित्यतया ब्राह्मणायेति स्मरणेन च ब्राह्मणभोजनं विप्राणां मनुष्ययज्ञः । यतिवानप्रस्थब्रह्मचारिगृहस्थक्रमेण क्षत्रादीनाञ्च स्वान्यूनजातीयभोजनन्तथा उत्कर्षक्रमेण च प्राशस्त्यम् । शूद्रभोजनन्तु शूद्रस्यैव मनुष्ययज्ञः । काम्यबलिमाह— विष्णुः—"दद्यादशेषभूतेभ्यः स्वेच्छया सुसमाहितः ।" देवा मनुष्या इत्यादि पञ्चश्लोकीम्पठित्वाह —

"इत्युच्चार्य्य नरो दद्यादन्नं श्रद्धासमन्वितः ।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥
श्वचाण्डालविहङ्गानां भुवि दद्यात्तु यो नरः ॥"

इतिकारेण मिलितपञ्चश्लोकपरमर्थः ।

मनुः-- "शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणाञ्च शनकैर्निक्षिपेद्भुवि ॥"

श्वबलौ वायसबलौ - श्वानौ द्वावित्यादि ऐन्द्र वारुण इत्यादि मन्त्रौ व्यासेनोक्तौ, तेन तन्मन्त्रपाठानन्तरम् ओं श्वभ्यो नमः इत्यभिधाय बलिर्देयः । एवं काकबलिरपि, एष प्रथमं श्वबलिः । अथ पतितबलिर्मनुवचनात् ततश्चाण्डालबलिः । मनुविष्णुपुराणाभ्यां श्वबल्यनन्तरकथनात् ।

अथ पापरोगिबलिर्मनुवचनात् । न च तत्र सङ्करजातिविशेषश्वपाकपदार्थः तमधिकृत्यश्वपाक इति कीर्त्यं इति स्मरणादितिवाच्यम्, श्वपाकपदस्य तत्र परिभाषितत्वेऽपि हलन्तश्वपाक् पदस्यातथात्वात् । क्रमे विनिगमनाविरहप्रसङ्गात् , भिन्नमूलकल्पनापत्तेः । चाण्डालश्च पचावित्यमरे पर्यायकथनाच्चेति मन्तव्यम् ।

ततश्च वायस एव विहङ्गपदार्थः। सामान्यार्थकमूलकत्वान्न विरोधेन विशेषपरत्वात्। सर्वशेषे कृमिबलिर्मनुपाठक्रमादिति। एतद्विरुद्धपद्धति-लिखनमवन्धने मिश्रादीनामपरिश्रमनिवन्धकृताम्।

श्राद्धदिने तु क्षयाहे भूरिभोजनमिति मनुष्ययज्ञो दर्शितः। "आसुरन्तद्भवेच्छ्राद्धं दश यत्र न भुञ्जत" इति वचनाच्छ्राद्धाङ्गमपि तत्।

भविष्ये—"नित्यश्राद्धमदैवं स्याद् दक्षिणा पिण्डवर्ज्जितम्।"

काशीखण्डे—"नित्यश्राद्धमदेवं स्यादर्घपिण्डविवर्ज्जितम्।
दक्षिणारहितं त्वेतद्दातृ भोक्तृ व्रतोज्झितम्॥"

स्मृतिः—"अग्नौ करणमर्घञ्च वाहनञ्चावनेजनम्।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्ज्जयेत्॥"

नेह रक्षोघ्नदीप तत्प्रच्छादने आचारादनुप्रकरभूस्वाम्यन्नदानवर्ज्जनञ्च। आदौ देयेतिशेषो द्वितीये च नञः प्रश्लेषो दक्षिणा पदोत्तरमिति भ्रमः। न्यायप्राप्तानुवादानर्थक्यात्।

## अथ भोजनम्

मनुदक्षौ — न भोजनम्. पतिव्रता धर्मबिरोधात्। पुत्रबध्वा अप्येवम् महद्भोक्तृपुत्रस्य तद्दैवतत्वात्। मातृ पितामह्यादेस्तु पुत्रपौत्रभोजनपूर्वोदस्थः शेषभुग्भवेत्।

याज्ञवल्क्यः— "बालक्यवासिनी बृद्धगर्भिण्यातुरकन्यकाः।
सम्भोज्यातिथिभृत्याश्च दम्पत्योः शेषभोजनम्॥"

ब्राह्मे —पात्रेष्वन्नानुरूपेषु पुत्रभृत्यानुजैस्सह।
भूमौ पात्रं प्रतिष्ठाप्य मौनेनान्नन्तु भक्षयेत्॥"

स्थानसङ्कीर्णत्वे बालेत्यादिक्रमेण भोजनक्रमः। अतिथिश्च गृहस्थश्च

यत्यादीनां बालादि भोजनात्प्रागेव वैश्वदेवपूर्वमेव भोजनस्योक्तत्वात्। स्थान-सौष्ठवे तु परिवेषणं बालादिक्रमेण, भोजनन्तु सहेति विशेषः। पत्न्याः पति-भोजनानन्तरं पतिदृष्टिविषयान्यस्थानसौष्ठवे चाऽध्वनि पत्या सह भोजनम्।

"न भार्या भोजनेऽश्नीयान्नैनमीक्षेत शाश्वतीति"—

मनुनापति दृग्गोचरेऽध्वादिभिन्नं भाषणनिषेधात्। अध्वनि तु विशेषो ब्राह्मे—

"ब्राह्मण्या भार्यया सार्द्धं क्वचिद् भुञ्जीत वाऽध्वनि।
असवर्णस्त्रिया सार्द्धं भुङ्क्त्वा पतति तत्क्षणात्।"

सार्द्धमिति—परस्परसाम्मुख्येन सहोपवेशनपरम्। न त्वेकपात्रे उच्छिष्ट-भोजन निषेधात्। यत्वेकपात्र इत्यप्यर्थः।

परस्परतिचुम्बनं स्त्रिया प्रोद्वाहदिने पत्युच्छिष्टभोजने चोच्छिष्टता-दोष प्रतिप्रसवात्। चतुर्थीरात्रौ पतिदृष्टिसम्मुखभार्याशनवत्। सुवासिनी पितृकुलवासिनी, भगिनी दुहितादिरूढा कन्यका, कुमारी पुत्र्यादि पत्न्याश्च पतिभोजनपूर्वमेव स्थान सौष्ठवे सह वा भोजनम् बृद्धपदेन तत्प्रतिपादनात्। भृत्यः - पुत्र पौत्रादिः। परिचारकविप्रश्च। पुत्रपश्चाद्भोजनन्तु निषिद्ध मन्यत्र दम्पत्यो र्भुक्तशेषञ्च पूर्वोपस्थितस्याभोक्तव्यं दम्पति भोजनानन्तराग-तयत्यादेस्तु तद्भोक्तव्यमेवेति विवेकः।

अङ्गिराः "ब्राह्मण्या सह योऽश्नीयादुच्छिष्टम्वा कदाचन।
न तत्र दोषं मन्यन्ते नित्यमेव मनीषिणः॥
उच्छिष्टमितरस्त्रीणां योऽश्नीयाद् ब्राह्मणः क्वचित्।
प्रायश्चित्ती स विज्ञेयः सङ्कीर्णो मूढचेतनः॥"

ब्राह्मणीपदं--सवर्णापरमिति मिश्राः। मुनिभि र्द्विरशनमुक्तमिति पूर्वलि-खितवचनादेकभक्तोपवासदिनभिन्ने भोजनद्वयमावश्यकम्।

"सायम्प्रात र्मनुष्याणामशनन्देवनिर्मितम्।
नान्तरा भोजनङ्कुर्यादग्निहोत्रसमो विधिः॥"

इतिवचनस्वरसोप्यत्र। नैकसूर्ये द्विभोजनमिति निषेधो भोजनमात्रे तत्रैवं प्राणाहुतिः। तद्यद्भुक्तं प्रथममागच्छेत्तद्धोमीयमिति छान्दोगात्। एवञ्चैकभुक्तश्राद्धदिने फलमूलादेः प्राशनम्। दिनान्तरभोजनद्वयकालभिन्ने तदशनमनिषिद्धम्।

अन्यत्र फल मूलेभ्य इत्यन्यत्राभ्यनुज्ञानात्। पृथुकादिभोजनञ्चोभयत्र निषिद्धम्, प्राणाहुतिमच्च भुक्तपदेन फलमूलाद्यन्यतराभिधानात्। स्त्रीशूद्रयोस्तु नान्तरभोजननिषेधः। अग्निहोत्रसमत्वाभिधानेन तदधिकारिविषयकत्वात्। अतएवाविभक्तकनिष्ठभ्रात्रादेरनुपनीतस्य तु न निषेधः। जलञ्चोभयत्र दिवसभोजनात् पूर्वं निषिद्धम्। तदनन्तरञ्च कार्यमेव। "अभुक्ते भुक्तवत्पीतं भुक्ते पीतमपीतवत्॥" इति वचनादित्याकलयामः।

"भस्मस्तम्भजलद्वारमार्गैः पङ्क्ति च भेदयेत्।
कोहि कस्य विजानाति प्रच्छन्नं पातकं महत्॥"

ब्राह्मे – "अन्नन्दृष्ट्वा प्रणम्यादौ प्राञ्जलिः प्रार्थयेत्ततः।
अस्माकं नित्यमस्त्वेतदिति भक्त्या च पूजयेत्॥"

उपहृतमनुपसङ्गृह्य सर्वाङ्गुलीभिरश्नीयात्। स्वीकारस्पर्शसन्निधिस्थापनानि तदुत्तरकार्याणि।

तथा—"चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धं चन्द्रकम्।
कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्॥
ब्रह्मरुद्रेन्द्रचन्द्रार्क्कवसवो मण्डलान्तरात्।

निवेदितं नरैरन्नं यस्माद्गृह्णन्तीत्यन्वयः। तेन मण्डलमध्यबलिदानार्थमण्डलम्। सञ्चितपापपङ्क्तिभेदकमपि जलभस्मकृतंमण्डलादि त्रयेण तु न मण्डलकृत्यं बलिदानं बलिस्थानाम्मनाण्डल वेष्टनोभयनिर्वाहः। अन्नमिति शुद्धान्नोपादानाद्बलि परमिदंबलिदानेऽपि मानमिदं वचनमर्थतः नतु नैवेद्यपरम्। अकृत्वा तु न भोक्तव्यमित्यनेन तत्र व्यञ्जनदुग्धादेरपि देयत्धात्। एवञ्चार्थसंशयतां पूर्यरुद्रनैवेद्यदानमयुक्तन्दूरपराहतञ्च दुर्गागणपतिनैवेद्यदानं भोजनसमये पूजाकाल एव हि तेषां पञ्चोपचारपूजनं

विहितम्, तस्माद्विष्णवे इष्टदेवतान्तराय च नैवेद्यं भोजनोपक्रमे कार्यम्। माथुरादीनां वैष्णवानान्तथैवाचारादित्याभाति। शूद्रैरपि नैवेद्यं देयम्। "अनिवेद्य न भुञ्जीतेति वचनात्। एवमनुपनीतयोषिद्भ्यामपि पक्वोच्छिष्टतादोषोऽपि नात्र बली। ब्राह्मादि बलि र्वाजसनेयिनामेव।

सामगानान्तु – "अभ्युक्ष्याग्निं नमस्कारैर्भुवि दद्याद्बलित्रयम्। भूपतये भुवनपतये भूतानाम्पतये तथा।"

इति बृहद्व्यासवचनोक्तम्बलित्रयम्। शूद्राणान्तु - वाजसनेयिरीत्या बलिदानम्। अत्र साम्यादिना – तद्रीतेरन्यत्र दर्शनात्।

वस्तुतस्तु - स्त्रीशूद्रासच्छूद्रश्च विहितमण्डलस्थानीयाभ्युक्षणस्य मण्डलाभावाद्बल्यनधिकारी, सच्छूद्रस्तु - वैश्य इत्यर्द्धचन्द्राकारमण्डलाधिकारिण्यधिकारीति विवेक्तव्यम्।

बलित्रयपूर्वं नारायणाय नम इति बलिदानमाचरन्ति सामगाः। तत्र मूलन्तु अदत्त्वा तु न भोक्तव्यमित्येव। न च नैवेद्यमात्रपरन्तत्र - "आदावन्ते च मध्ये च हरिः सर्वत्र पूज्यत" इति वचनेन - पूजा भोजनाङ्गनैवेद्यबलिदानेषु" मत्करणीये हि नारायणः बल्यन्तरे व्यञ्जनाद्यनुपग्रहादिहापि तत्त्यागः।

शङ्खः – "मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षण स्मृतम्। वैकल्पकमिदम्। सामान्यविधिबोधितोपवास-" साग्नि ब्राह्म बलोरनधिकारः।

"अनड्वान् ब्रह्मचारीच आहिताग्निश्च ते त्रयः।
अश्नन्त एव सिद्धयन्ति नैषां सिद्धिरनश्नताम्॥"

अश्नन्त इति प्राणाहुति पूर्वकालः। आतादृश भोजनस्य राग प्राप्तत्वेनाविधेयत्वात्। यथा तीर्थस्नानविधिर्वैधमेवस्नानं विदधाति। अन्तराभोजननिषेधादौ तदपूर्वकाशनमात्रं विषयः। यथा नाजस्रं स्नायादिति निषेध वैधं सवैधञ्च स्नानम्। यथा वा निशास्नाननिषेधे - मण्डनञ्च प्रणवाद्यन्तया व्याहृतित्रयसहितगायत्र्या द्विजाः कुर्वंति। ब्रह्मे - "तेजोसीति जपन्नन्नं प्रणमेदस्तृतञ्च तत्।" अमृताभिन्नत्वविशिष्टं ध्यायेत्।

शातातपः—"परिधानमपोशानं पूर्वमाच्छादनम्परम् ।
भवत्यन्नमनग्नीह सोत्तरीयन्तथामृतम् ।।"

अपोशानेनाग्नं उत्तरीयेण प्रत्यपोशानेनामृतं जीवनबद्धं कम्भवतीत्यर्थः।

ब्राह्मे-- "भुक्त्वाऽमृतापिधानार्थम्पिवेत्तोयं सकृत्सकृत् ।
येनानग्नम्भवेदन्नं जीवभूतं जगत्त्रये ।।"

अपोशानेन पूर्वोक्तेनानग्न प्रत्यपोशानेन जीवभूतं भवेदित्यर्थः। सकृदल्पं तोयं सकृदेकवारं पिवेदित्यर्थः।

वस्तुतस्तूभाभ्यां परिधानाच्छादनायामनग्नममृतञ्च भवतीत्यर्थः। तदुक्तं छन्दोगपरिशिष्टोपनिषदे सहोवाच - किमेवासौ भविष्यतीत्याप इति होचुस्तस्माद्वा एतदपिष्यन्तः पुरस्ताच्चोपविष्टाद्भिः परिदधति। लम्बकोदवासो भवत्यनग्नो भवति। स प्राणः एतदन्नं परिदधति परिधानवद्भवति। एवं सति वासो लम्बकोऽधरीयोत्तरीयलाभवान् प्राणोप्यनग्नो भवतीत्यर्थः।

याज्ञवल्क्यः-- "अपोशानोपविष्टास्यादधस्तादश्नती तथा ।
अनग्नममृताञ्चैव कार्यमन्नं द्विजन्मना ।।"

सन्यासपद्धतौ-"अथोपस्तरणार्थस्तु प्राश्यतो अमृतं सकृत् ।
अमृतोपस्तरणमसि स्वाहेत्यन्तेन मन्त्रवित् ।।"

एवञ्चामृतापिधानमसि स्वाहेति प्रत्यपोशान मन्त्र उक्तः।

तथा-- "प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहाप्रणवसंयुताः।
पञ्चाहुतीस्तु जुहुयात्प्रणवाग्निनिभेषु च ।।
प्राणतृप्ते तु तृप्यन्ते नित्यं भूतार्क्कचक्षुषः ।
व्याने तृप्ते तु तृप्यन्ते श्रोत्रेन्दुककुभादयः ।।
अपाने तृप्ते तृप्यन्ते वह्निवाग्भूमयस्तथा ।
समाने तृप्ते तृप्यन्ते मनःपर्जन्यविद्युतः ।।
उदाने तृप्ते तृप्यन्ते वाय्वाकाशौ च सर्वदा ।।"

क्रमोऽयं छन्दोगपर: ।

उक्तं हि छान्दोग्ये - पृथममागच्छेत्तद्धोमीयमयां पृथमाहुतिञ्जुहुयात्पृाणायस्वाहेत्यादि । अस्यांद्वितीयामादुतिञ्जुहुयात्तां जुहुयादपानायस्वाहेत्यादि । अस्यां तृतीयायां जुहुयादपानायस्वाहेत्यादि । अस्याञ्चतुर्थीञ्जुहुयात्तां जुहुयात्समानायस्वाहेत्यादि । अस्यां पञ्चमीञ्जुहुयादुदानाय स्वाहेत्यादि । पश्येन्द्रानभिधाय स य इदमविद्वानग्निहोत्रञ्जुहोति यथाङ्गारानपोह्यभस्मनि जुहुयात्तादृशस्यादभ्य यत्तदेवम्बिद्वानग्निहोत्रन्तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतम्भवतीत्यादि । पृणवाग्निनिमेषु पृणवानलत्वेन पृाणेषु ध्यातेषु सत्सु ।

**बौधायन:**-- पृाणायस्वाहाऽपानायस्वाहा व्यानायस्वाहोदानायस्वाहा समानायस्वाहेति पञ्चान्नेन पञ्चाहुतीर्हुत्वा तूष्णीम्भूयो वर्त्तयेत् ।

"प्राणाग्निहोत्रमन्त्राश्च निरुद्धे भोजने जपेत् ।" निरुद्धे - निगताग्निबन्धने ।

प्राणापानसमानाना मुदानव्यानयोस्तथा इति तु क्रमो माध्यन्दिनीयानां समाख्या सम्वादात् ।

द्विजन्मनेति - याज्ञवल्क्य वचनान्मन्त्राभावाच्च होमनिषेधाच्च स्त्रीशूद्रस्य नात्राधिकार: । तेजोसीत्यपोशान प्रत्यपोशने च न स्त: मन्त्रानधिकारात् । मण्डलन्त्वमन्त्रकम् विशेषविधे: ।

न च रथकारवदपूर्वविद्याकल्पनम् आचारसिद्धस्य मन्त्रस्य शूद्राणामाचारविरहनिरस्तत्वात् । कालमाह —

**कात्यायन:**-- "अहनि च तथा तमस्यन्यां सार्द्धप्रहरयामान्त:" । भोजनपूर्वकृत्यं शूद्रसाधारणमाह:-

भारते-- "घासमुष्टिम्परगवे सान्नन्दद्यात्तु य: सदा ।
अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥
सौरभेय्य: सर्वहिता: पवित्रा: पुण्यराशय: ।

प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
दद्यादनेन मन्त्रेण गवाङ्ग्रासं सदैव हि ॥"

नित्यमिदं सदास्मरणात्। काम्यमाह–

नन्दिपुराणे– "यो गवां रुद्रदत्तानां किञ्चिद्दद्याद्ग्रवाह्निकम् ।
स गच्छेद्रुद्रभवनं कुलद्वयसमन्वितः ॥
योऽन्यासामपि च गवान्दद्यान्मर्त्यो गवाह्निकम् ।
सोऽपि गच्छेन्नरः स्वर्गन्दिव्यमेव न संशयः ॥"

आह्निकम् - दिवसाहारम् । अन्यासामरुद्रदत्तभिन्नानाम् ।

भविष्ये- "तृणोदकेन संयुक्तं स प्रदद्याद्गवाह्निकम् ।
कपिलाशतदानस्य फलं विद्यान्न संशयः ॥

पञ्चभूते शिवेप्यन्ये पवित्रे सूर्यसम्भवे ।
प्रतीक्षमम्मया दत्तां सौरभेयि नमोस्तु ते ॥

विष्णुपुराणे- पञ्चग्रासान्महामौनं प्राणाद्याप्यायनाय महामौनमिति-ध्वनिचेष्टादि निवृत्तिपरम् । मौनस्य भोजनसामान्ये विधेः प्राणाहुतिमन्त्रस्तु मनसैव पाठ्य । इदन्त्वधेयम्– भुक्तमागच्छेदित्युपनिषद्दर्शनाद्व्यञ्जनादेर्न्न प्राणाहुतिकर्मता। सतिसम्भवे भुक्तं घृताक्तम् अग्नौकरणवद्धोमत्वात् व्यज-नक्षारवर्ज्जमित्यग्नौकरणाभिहितस्यापि न्याय्यत्वात् ।

"नाघृतं भोजयेद्विप्रं स्वगृहे सर्पिषीसती"ति वचनस्वरसाच्चेति । अशौ-चेऽपि प्राणाहुति तन्मन्त्रपाठादिः ज्ञाति साहित्येन विधेर्मासादौ निषेधस्य भोज-नेऽशौचिनोविधानात् - साङ्गस्यैव च विधिः प्रागाप्राप्तया प्राणाहुतिरेवविधेयेति तु परमार्थः। अग्निहोत्रसमत्वबोधनाच्च, मन्त्रमात्र जपस्य भोजननिरोधेऽपि-बोधनाच्च ।

अपोशान मन्त्रस्यापि प्रधानविध्याक्षेपेप्यलग्नत्वबोधनं सूचितनिषेधवारण-त्वाच्च । तस्य पाठः मण्डलविधिना गायत्र्या साङ्गभोजनविधानाच्च तेजोसी-

त्यस्य पाठः। अतएवाश्नीयात्तन्मनो भूत्वा पूर्वन्तु मधुरंरसमिति वचने मधुरं घृतादीति व्याख्यातम्। आदिपदेन मधुसंग्रहः।

दक्षः— "वामहस्तस्थिते दर्भे यत्तोयं पिवति द्विजः।
रक्तपानं भवेत्तस्य पीत्वा चान्द्रायणञ्चरत्।"

इति वामेति साधारणम्।

ब्राह्मे— "ग्रासशेषन्तु नाश्नीयात्पीतशेषं पिवेन्न च।
शाकमूलफलेष्वादि दन्तच्छेदैर्न्न भक्षयेत्॥"

ग्रासेकरणे शेषमवशिष्टम्पीतेजले दुग्धादौ चोष्याम्रादिरसे वा तत्पानोच्छिष्ट पात्रेऽवशिष्टम्। तेनानुच्छिष्टजलपात्रस्तु जलपानाद्याचारोबिरुद्धः। दन्तच्छेदैः मुखप्रवेशपूर्वखण्डीकरणैः।

तथा— "उद्धृत्य वामहस्तेन यत्तोयं पिवति द्विजः।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः॥"

तोयस्य साक्षाद्वामहस्तेनोद्धरणं निषिद्धम्। नतु तदाधारपात्रोद्धरणमश्रुतत्वात्। आचमने वामकरोद्धृतपात्रस्थजलविधानाच्चेतिभ्रमः-- विशिष्टान्वयादुद्धरणमिव पानमपि साक्षाद्वामहस्तेन शुद्धेन निषिद्धम्। पिवेन्नाञ्जलिना तोयमितिवत्। नतु केबलवामहस्तावर्ज्जितजलपात्रस्रावितजलपानन्तथा। अन्यथा-- अञ्जलिधृतजलपात्रस्रावितजलपानमपि दुष्येत। अथ पिवतीत्यत्रैव वामहस्तेनेत्यन्वयादुद्धरणे निषेध एव नेति साक्षाद्वामहस्तोद्धृतजलमपि पेयमस्त्विति चेत्, नैवम् विशिष्टान्वयस्यौत्सर्गिकत्वात्। उद्धृतेत्यस्यानर्थक्य प्रसङ्गाच्चेतिदिक्।

जलप्लावनेन शीतलीकृतमपर्युषितमप्यन्नव्यञ्जनं लवणाधिक्यदोषमोषाय जलप्लावितव्यञ्जनदध्यादिभिरतिविमिश्रितञ्च सिद्धान्नं दध्यार्द्रकादिनाऽवतारितव्यञ्जनञ्च निषिद्धम्। अन्नीयाप्लाव्य वारिणेत्यसंस्कृतोद्देश्यकानुप्रकरे उच्छिष्टसन्निधिकृत्येऽश्रुत्वेयसन्नयनजलप्लावनयोर्विधानौचित्यात्।

अतएव-- श्राद्धाग्नौकरण भूस्वाम्यन्नदानातिथिभोजन नैवेद्यदान बलिवि-श्वेदेवेषु न सन्नयनादिकम् । घृतमधुदुग्धाम्र जम्बीर रसादिनाप्लावनञ्चो-त्कर्षप्रयोजकत्वाज्जलमात्रप्लावननिषेधाद्घृतमध्वाद्यभिधारणविधानाच्चानि -षिद्धम् । पृथुकादौ दधिकदलादिभिरतिसन्नयनन्निषिद्धम् । वैद्यके-दधि-कदल्योर्गुडदग्धादुग्धमत्स्ययोर्दुग्ध वार्तुकयोर्दुग्ध लवणयोश्च सन्नयनं निषेधस्वरसात् ।

तेन शष्कुल्यादिरिव भक्त पृथुकादेरुपरि दधिकदलादिकं कथञ्चित्संयोज्य भोक्तव्यम । उत्कर्षप्रयोजकमप्यतिमिश्रणं हेयमेव, वचनस्वरसात् ।

एवं दधीनि वाऽङ्गारे पक्वकदलवार्त्ताकखिन्नवास्तूकादौ च प्रत्यक्षलवण-मुत्कर्षमपि हेयमेव, उच्छिष्टतादोषमोषकञ्च जलप्लावनं विहितत्वाददुष्टं शर्करादौत्वाश्रनाशप्रसङ्गादनुपादेयम् । प्रत्यक्षलवणमप्यौषधेऽनिषिद्धम् । लवणे सैन्धवसामुद्रे च प्रत्यक्षेऽभ्यनुज्ञाते सामुद्रं समुद्रजं सम्भवीति ख्यातन्न तु साम्भवीति प्रसिद्धमित्यवद्धार्थ सिद्धवदभिधाने सबद्धबुद्धिर्बुद्धिमता विधातव्या काटेयादेः शक्तिग्राहकस्याग्रहणादित्यत्राग्रहः सकृयैरस्मदनुग्रहेण विग्रहमपहाय निर्वाह्यमितिदिक् । साम्भवि लवणमप्रत्यक्षस्तुष्यमेव आकरजस्याशौचनिषेवात् ।

ब्राह्मे – "जठरं पूरयेदर्द्धमन्नैर्भागञ्जलेन च ।
वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ॥
विद्यमानेन हस्तेन ब्राह्मणो ज्ञानदुर्दलः ।
तोयं पिवति वक्त्रेण श्वासौ यामे तु नान्यथा ॥"

जलाशयस्थालीस्थ जलपरमिदम् ।

पुलस्त्यः-- करेण तु पिवेत्तोयं यावन्मासं न भक्षयेत् ।
मांसलिप्तकरे तोयं तुल्यं मासं स भक्षणम् ॥

करेण-- दक्षिणकरेण ।

ब्राह्मे-- "हस्तम्प्रक्षाल्य गण्डूषं यः पिवेदविचक्षणः ।
स देवाँश्च पितृँश्चैव आत्मानञ्चोपघातयेत् ॥"

हस्तं मांसलिप्तम् पुलस्त्यसम्बादात् । लेपानन्तरमन्तर्मलहरतं सम्प्रक्षाल्य पृत्यपोशानं न पिवेदित्यर्थं इति तु मिश्राः ।

तथा— "हस्तेन लङ्घयेन्नान्नं नोदकेन कदाचन" । अन्नमिति साधारणम् । तेनात्मसहितान्नस्य मण्डलेन वेष्टनमनिषिद्धम् । उदकपदम्वा प्रत्यपोशानपरम् । लङ्घनं न मध्येन विवक्षितम् ।

तथा— "यस्तु पाणितले भुङ्क्ते यस्य फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यस्तु तस्य गोमांसवच्च तत् ॥"

मनुः— "नाहारमुपभुञ्जीत सन्निकृष्टमृते सति ।
स्वग्रासतोऽग्रासतो वा तिष्ठन्गच्छन्हसन्नपि ॥"

स्वग्रासे-- तत्सन्निहितदेशेवाशरे विद्यमाने न भुञ्जीत ।

तथा— "नाति प्रातर्नातिसायं न सायं प्रातिवासितः ।
अतिप्रगे प्रतिसन्ध्यायां दिनपृथममुहूर्त्तयोः ॥"

अतिसायं त्रिदण्डात्मसायं सन्ध्यायाम् पृातःकृतभोजनश्च सायाह्ने च न भुञ्जीत ।

## अथ मांसभक्षणवर्जनम्

मनुः- 'नाद्यादविधिना मांसं विधिज्ञो नापदि द्विजः ।
जग्ध्वा ह्यविधिना मांसं पृेत्य तैरद्यतेऽवशः ॥
न तादृशं भवत्येनो मृगहन्तुर्द्धनार्थिनः ।
यादृशं पृेत्य भवति वृथामांसानि खादतः ॥
मत्स्यादः सर्वमांसादः तस्मान्मत्स्यान् विवर्ज्जयेत् ।
यस्तु भोजयते मांसं विधिं हित्वा पिशाचवत् ॥
स लोके प्रियतां याति व्याधिभिश्चैव पीड्यते ।
असंस्कृतान्पशून्मन्त्रैर्नाद्याद्विपृः कथञ्चन ॥

मन्त्रैस्तु संस्कृतान्नस्याच्छाश्वतं विधिमास्थित. ।
पाठीनरोहितौ मत्स्यौ प्रशस्तौ हव्यकव्ययोः ।
राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः ।
पञ्च पञ्चनखा भक्ष्याः ब्रह्मक्षत्रेषु राघव ।
शशकः शल्लकी गोधा कूर्मः खड्गी तु पञ्चमः"

आगमे-- "मन्त्रवीर्यहरा मत्स्या पाठीनस्तु विशेषतः ।"

स्मृतिः-- "अग्निहोत्रङ्गवालम्भं संन्यासं पलपैतृकम् ।
देवरेण सुतोत्पत्तिङ्कलौ पञ्च विवर्ज्जयेत् ॥"

याज्ञवल्क्यः-- "प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।
देवान् पितॄँश्चार्चयित्वा खादन्मासं न दोषभाक् ।
भक्षयँश्चापि मांसानि शेषभोजी न लिप्यते ।
औषधार्थमशक्तो वा नियोगाद्यज्ञकारणात् ॥"

यमः-- "आमन्त्रितस्तु यः श्राद्धे दैवे मांसं समुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमिच्छति ॥"

हारीतः--ग्राम्यारण्यानां पशूनामश्नन्ति - अजमेष महिष हरिण खर्ग रुरु पृषतन्यङ्कऋष्य महारण्यवासिनश्च तथा वराहः ।

वशिष्ठः-- "खर्गिनि विविदन्त्यके ग्रामशूकर एव च ।"

ब्राह्मे-- "पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा ।
भूमेरन्तरितङ्कृत्वा मृद्भिराच्छादितञ्चरेत् ॥
पञ्चमांस मृगीषश्च प्रज्ञानात्तन्न भक्षयेत् ॥"

न भक्षयेदित्यनुवृत्तौ गौतमः-- अपतद्दवसन्नवृथा मांसानि ।

नन्दिपुराणे-- "यदि वा न समर्थःस्यात्सदामांसविवर्ज्जने ।
वर्ज्जयेदयने मुख्ये कृतस्वर्गमतिर्न्नरः ॥

चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ।
पञ्चपर्वाणि वर्ज्यानि षडशीति मुखानि च ॥
सङ्क्रमञ्चापि सूर्यस्य विषुवे चापि वार्षिकी ।"

ज्योतिषे-- "चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥"
अत्रसन्निहितं पापं तैले मांसे भगे क्षुरे ।
एतेषामुपयोगेन तस्मिन्काले कृते नरैः ॥
विण्मूत्रभोजनन्नाम प्रयाति नरकं नृप ।"

लौगाक्षिः-- "जवायुक्तानां भक्ष्याणाम् स्त्रियम्भक्षोन्नजातुचित् ।
मोहात्तामपि भुञ्जानो रौरवं नरकम्ब्रजेत् ॥

यमः-- ऋजीषपक्वमांसञ्च मत्स्यानप्यनुपातने ।"

शङ्खः – "तित्तिरञ्च मयूरञ्च नारकञ्च कपिञ्जलम् ।
बार्द्धानसं वर्त्तकञ्च भक्ष्यानाह यमस्सदा ॥

रामायणे— 'घृतकुम्भसमास्तत्र शव्यभीर्भक्षयिष्यसि ।"

वर्जयेदित्यनुवृत्तौ बृहस्पतिः- "क्रव्यादामकुलीनम्वा तथा ग्रामनिवासिनः ।"

तुल्यमत्र समुदायार्थः- सामिमा/बधमेधेन यो यजेत शतं समाः ।
न खादति च मांसानि सममेतद्युधिष्ठिर ॥"

रतिकाम्यः सदा मांसत्यागसमर्थः । पर्वचतुर्थ्याद्येक भुक्ताद्यशौचान्य-
काले हव्य कव्य देव नैवद्य तिथि शेषाणि मांसानि भक्षयेत् । कालेति गोमांस-
निषिद्धमिति । वृथा – अवधिना मत्स्या न, निषिद्धान् मत्स्यकण्टकशम्बूक-
मकरादीन् । आगमोक्तमन्त्रोपासकस्तु सर्वान्मन्त्रैः प्रेक्षणमन्त्रैः आरण्यपशु
मत्स्यपक्षिणस्तु पुरैव प्रोक्षिता इत्यत्रान्याभिहितमिति मतेषु प्रोक्षणङ्कार्यम् ।
ब्रह्मक्षत्रे ष्विति बहुवचनेनाद्यर्थकेन वैश्यशूद्रसंग्रहः ।

यतिविषयस्तु निषेधोऽन्यत्र विस्तृतः । सशल्काः शफरादयः वर्मिवृह-

च्छिरमश्विनिचिमसशफरेति बोधायनोक्ताः सिंहतुञ्चाअनिप्रभृतयः। वर्मी--वामीति प्रसिद्धः। सर्पमस्तकमत्स्यनिषेधो मोण्डेति प्रसिद्धः। बृहच्छिरा-भाकुर इति प्रसिद्धा। चिलचिमः स्थूलचरो रोहिताकारः।

मयूरसदृशः पक्षी जलचरत्वेन मत्स्यमध्ये गणयित्वानिषिद्धोयमेनसचक एव प्रसिद्धः। मिथिला प्रसिद्धमयूरोप्यनेन निषिद्ध्यते। गोधासनस्य तु गोहि-नाम्नी, तद्भक्षणे तु सिष्टावगानन्निषेधोऽप्युन्नीयते। खगि वनीयशूकरयोः श्राद्धादत्तयोन्निषेधः। शूकरस्य ग्राम्यस्य तु विगानान्निषेध एव। अग्नि-होत्रमिति—

"यावच्च जाह्नवीदेवी वर्त्तते मर्त्यमण्डले।
संन्यासमग्निहोत्रञ्च तावदिच्छन्ति केचन॥"

विशेषज्ञाः--प्राणात्यये सम्भाव्यमाने श्राद्धेऽतिथिद्विजपूजनेच्छया प्रोक्षितं शेषभोजी श्राद्धातिथिशेषभुक्। एवञ्च नित्यश्राद्धातिथिदेवपूजनेषु मांसदान-मनुमतम् नियोगो गुर्वाद्याज्ञा श्राद्धे प्रमीतोद्देश्यके दैवे विश्वदेवश्राद्धेऽतिथितया पूजने च मेषमहिषयोर्विगानान्निषेधः। सर्षपग्रामीण नेपाल देशीययोराचाराच्च विधिरपि। एव वन्य शूकरेपीति केचित्।

एकशफविषये वराहविधिरिति तु भ्रमः। अप्रसिद्धत्वात्। रुरुर्भेखा-वेति प्रसिद्धः। पृषतो विन्दुचित्रः ऋष्यो रोझ इति प्रसिद्धः। महाऽरण्यवा-सिन इति वराहविशेषणम्। पृष्ठमांसं पशोर्ज्जन्तोः सर्वस्य वा गर्भशय्यापक्षि मत्स्याण्डम् शुष्कमांसत्वेन कस्तूर्यपि निषिद्धा। भूमेरिति गर्ते निःक्षिप्य गन्धा-पनयनाय मृदाच्छादितमित्यर्थः।

पक्वेति- अङ्गारपक्वं शूलपक्वार्थकम्। ऋजीषं पिष्टङ्कृत्वा पक्वम्-अपतद्दिति जन्मदन्तपातहीनेत्यर्थः। अवसन्नो रोगखिन्नः पशुः।

मुख्येसङ्क्रमान्तरा दुत्कृष्टे तेनात्यन्ताशक्तौ सङ्क्रमान्तरेषु वर्ज्जनेऽपि तत्रवर्ज्जनम्विधीयते - तदपेक्षयाशक्त प्रत्याह- चतुर्थीतिश्लोकेन, ततोऽपि चोक्त प्रत्स्याह-सङ्क्रमञ्चेति, चकारेण- चतुर्द्दश्यष्टमी पञ्चदशीनां संग्रहः विषवस्य

पृथगभिधानम् । पञ्चपर्व त्यागिन: किञ्चिदशक्तौ षडशीतिविष्णुपदी मांस-त्यागाभाव सूचनाय- विषवौचेति चकारेणायन संक्रमसङ्ग्रहः । अनुपाकृतान-शकोपमारणादि संस्कारदीनान्मयूरो दक्षिणस्यां तृणमयूरेति प्रसिद्धः । तित्तिर-कपोतनावक कपिञ्जल तृणमयूरा इति बौधायनसम्वादात् । नारकोला वा इति प्रसिद्धः ।

"कपिञ्जलो गौरतित्तिरः वार्ध्रीणसः ।
कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ॥
स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमाश्रुतिः ।"

इति मनुना लक्षितः । वटको- वटयीति प्रसिद्धः । कपोतो वन्यो ग्राह्यः । याज्ञवल्क्येन वृहस्पतिना च ग्राम्यकपोतनिषेधात् । शराणि बधङ्गे ति प्रसिद्धः । क्रव्यादा मांसभक्षिणः ।

## अथ प्रकीर्णकम्

"आमिषं शक्तिकाचूर्णमामिषं महिषीपयः ।
यतिश्च विधवा चैव तस्मात्तत्परिवर्ज्जयेत् ॥
क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।
सप्तरात्रव्रतङ्कुर्याद्येषु यत्परिकीर्त्तितम् ॥"

तस्मादिति-- आमिषत्वस्य वर्ज्जनहेतुत्वाभिधानान्निरामिषभोजनकर्त्तुः सर्वस्येदम्वर्ज्जनीयम् । विकारो दधि तक्र घृत पक्वान्नानि ।

हारीतः – न तैलं दध्यनुपातम् । दुग्धपानानन्तरं तैलं दधि वा न पेय-मित्यर्थः । अनुपानमित्यभिधानात्तक्रं निषिध्यते, नतु कठिनन्दधि दुग्धपानान-न्तरं निषेधात्कदलपृथुकादमेलने कठिनीकरणे वा दुग्धस्य भक्षणे कृते तक्रस्य दुग्धपाननिषेधः ।

देवलः—"न वीजान्युपयुञ्जीत रोगापत्तिमृते नरः ।
फलान्येषामनन्तानि बीजानान्तु विनाशनात् ॥

नाश्नीयात्पयसानक्तम् भुक्तञ्चेन्न स्वपेन्निशि ।
न क्षीरमुत्सृजेत्प्राप्तं पवित्रं हि पयः स्मृतम् ॥"

वीजानि कूष्माण्डकत्मकं शून्याश्याकानाम् । नाश्नीयादित्युक्तबीजानां पायसं निषिध्यते । विशिष्य- अतिविशिष्य तु नक्तन्तत्पायसम् तत्र च प्रायश्चित्तं रात्रिव्यापकं जागरणम् । क्षीरञ्चोदुग्धमुच्छिष्टपात्रपतितं न शेषयेत् यतस्तत्पवित्रं भगवन्नैवेद्यादौ ।

विष्णुः- न निश्शेषभुक् स्यादन्यत्र दधिसर्पिःपयःशाकेभ्यः । दधिसर्पिषो गव्येन शेषयेद् गव्यं पयश्चेत्यर्थः ।

एवञ्च गोरसमधुशाकाः शक्तौ सत्यामुच्छिष्टा न त्याज्याः । एते चोच्चयिता प्रस्था निष्क्रान्ताः शुचयो मताः । तथा- नैकोनिष्टं नोद्धृतस्नेहं न दिवाघृतं रात्रौ तिलसम्बद्धं न दधि सक्तुनः । धाना भृष्टयवा - दधिशक्तुमित्यत्र रात्रावित्यनुषज्यते ।

हारीतः-"पयः पानं पुनर्दानं सामिषं पयसा निशि ।
दन्तच्छेदमुष्णञ्च सप्त सक्तुषु वर्ज्जयेत् ॥"

पयसो जलस्य भोजनमध्ये पानम्, सक्तुनश्चोच्छिष्टंपात्रे पुनराप्रक्षेपः । मधुमांसादिना दुग्धेन वा सहासहाशनं रात्रावशनम् । मुष्टादिबद्धस्य दन्तेन खण्डनमुष्णघृतमधुदुग्धजलमिश्रञ्च त्याज्यमित्यर्थः ।

स्मृतिः— 'नोच्छिष्टे घृतमादद्यात्" पञ्चग्रासानन्तरं गव्यघृतं न गृह्णीयात् । प्राणाहुत्यविनियुक्ते पवित्रस्य जठरमरणार्थग्रहणानौचित्यात् । महिषीसर्पिषस्तादृशपवित्रत्वविरहेण ग्रहणेऽप्यदोषात् । आज्यपदेन घृतपदेन गव्यस्यैवान्यत्राप्यवगमात्- आज्यस्यार्थे सर्पिरितिमैत्रायणवचनात्- गव्यघृतस्यैव निःशेषंभक्षणोपदेशात् मिष्टाकारानुसारात् । एवञ्चानुच्छिष्टपुटकादिना भोजनमध्ये ग्रहणमपि निगृहीतमेव ।

शङ्खः—"न पर्युषितमश्नीयादन्यत्र रागचुक्रखाण्डरदधिगुड़गोधमयव-

देरौषवव्यतिरेकेण मण्डतापादलं पक्वान्नस्य गुडघृतादिसाधितस्य कोमलतार्थस्योदकमध्येश्रपणं च पुनष्पाकदुष्टं वार्त्ताककदलसूरणमत्स्यादेस्तैल भर्जितस्याम्लरसेन सह श्रपणं सूपादेस्निग्धस्य घततैलहिङ्गु जीरकपाकप्रक्षेपः,सूरणस्य हरिद्राजलस्विन्नस्य तैललवणादिभिः श्रपणञ्चानिषिद्धम् माषमुद्गादेर्भजनानन्तरपाकन्दुष्ट एव धान्यविशेषत्वात् लाजपृथकपृष्ठ तण्डुल कलायादीनामशौचादौ रसादिविमिश्रित सक्त्वादिपरम् । तस्यैवोदनवत्सुखभोज्यत्वेन कृतत्वादिति तादृशाशुच्यादि स्पर्शे दोष इत्याद्यूह्यम् ।

मनुः— "अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयःस्मृतम् ।
वैश्यस्यान्नं त्वन्नमेव शूद्रस्य रुधिरं स्मृतम् ॥
आददीताममेवास्यादवृत्तावेकरात्रिकम् ।"

अन्नं सिद्धान्नमामाम्यनुज्ञानात् । अन्न व भक्तमेव ।

हारीतः — "ब्राह्मणाऽन्नेन दारिद्र्यं क्षत्रियान्नेन प्रैष्यता ।
वैश्यान्नेन शूद्रत्वं शूद्रान्नैर्नरकम्व्रजेत् ॥"

प्रैष्यत्वादिः प्रशस्तान्न लाभेऽपि तद्भोजने ।

"शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चोपगच्छति ॥"

यमः— "ब्राह्मणान्नं क्षत्रियान्नं वैश्यान्नं शौद्रमेव च ।
तान्तांयोनिं व्रजेद्विप्रो भुक्त्वान्नं यस्य वै मृतः ॥"

विप्र इत्यनन्तरमप्यध्याहार्यः । तेन क्षत्रादेः कैमुतिकन्यायेन तत्तद्योनिप्राप्तिः ।

"यस्यान्न न तु भुक्तेन भार्यां समधिगच्छति ।
यस्यान्नन्तस्य ते पुत्रा अन्नाद्रेतः प्रवर्त्तते ॥
उपासते यो गृहस्थः परपाकमबुद्धयः ।
तेन ते पशुतां प्रेत्य व्रजन्त्यन्नाद्यदायिनी ॥"

उपासते निमन्त्रणादिकं विना सदा सेवन्ते । अन्नाद्यदायिनां- सिद्धान्न-

भोजयितृणां पशुतां जन्मान्तरे व्रजन्ति ।

"स्वपाके वर्त्तमाने यः परपाकं निषेवते ।
सोऽश्वत्वं शूकरत्वञ्च गर्द्दभत्वञ्च गच्छति ॥"

स्वपाके वर्त्तमान इति पाकसमर्थस्य परपाकसेवनमभ्यनुजानाति ।

"परपाकेन पुष्टस्य द्विजस्य गृहमेधिनः ।
इष्टन्दत्तन्तपोऽधीतं यस्यान्नन्तस्य तद्भवेत् ॥

अन्नादेर्गहणामिष्टिपत्यौ भार्यापचारिणी ।
गुरौशिष्टश्च याज्यश्च तेनो राजनि किल्विषम् ।"

तथा च तदन्नमभोज्यमितिभावः । गुरावुपनयनवेदाध्यापनकर्तरि ऋत्विजि च ।

शातातपः—"वनस्पतिगते सोमे परान्नं ये च भुञ्जते ।
तेषां मासकृतो होमो दातारमनुगच्छति ॥"

अमावास्या प्रथमपादार्थः, मासः तत्पूर्वोहोमोऽपुण्योपलक्षकं दातरि सिद्धान्नदम् ।

अङ्गिराः— "गोरसंचैव सक्तूँश्च तैलं पिण्याकमेव च ।
अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम् ॥"

सक्तूनीति - लाजपृथुकोपलक्षकम् । पिण्याकस्तिलखलिः पयसा दुग्धेन कृतं साधितम् ।

एवञ्च पायसं पृथुकवद्घृताऽशुचिस्पृष्टमपि भोज्यम् ।

याज्ञवल्क्यः— "ब्राह्मणान्नन्ददच्छूद्रः शूद्रान्नम्ब्राह्मणो ददत् ।
उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणञ्चरेत् ॥"

ब्राह्मणेति योगेन त्रैवर्णिकपरम् । शूद्रपदं वर्णसङ्करस्यापि ग्राहकम्, पुंस्त्वमविवक्षितम् । ददर्दिति परिवेषणपरम् भुक्त्व तत्परिवेषितम् । एवञ्च

विप्रान्नं क्षत्रियवैश्य परिवेषितम् - तदुभयान्नं त्रैवर्णिकविजातीयपरिवेषित-मदुष्टम् ।

तथा—उदक्यास्पृष्टं संघृष्टं पर्यायान्न च वर्जयेत् । संघुष्टमवज्ञासूच-कोद्घोषपूर्वकं परिवेषितं, पर्यायान्नं परस्मै परिविष्य तत्पात्रपरिशिष्टम्, तत्परि-वेषितम् ।

विष्णुपुराणे – अग्निराप्यतान्धात्रमित्यादि जीर्य्यत्वन्नमिदम् । तथेत्यन्तं श्लोकषट्कमुपक्रम्य—

"इत्युच्चार्य स्वहस्तेन परिमृज्यात्तथोदरम् ।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥"

इदञ्चाचम्यासन उपरि पाठ्यम् ।

विष्णुः – 'प्रवसित तथाग्निहोत्रम् यदाग्निहोममन्येत्तदाश्नीयात् ।"

एवञ्च पतिव्रता पत्या कृतं भोजनं यदा मन्येत तदा- तत्प्रवासे भुञ्जीत, नलप्रवासे दमयन्तीव । होमम्- वैश्वदेवम् ।

विष्णुपुराणे—"कृतपादादिशौचस्तु भुक्त्वा सायन्ततो गृही ।
गच्छेच्छय्यामस्फुटितामेकदारुमयीं नृप ॥
प्राच्यां दिशि शिरः शस्तम् याम्यायामथवा नृप ।
सदैवं स्वपतष्पुंसो विपरीतन्तु रोगदम् ॥"

रात्रिमात्रं शयनकालः मध्यमप्रहरद्वयं शस्तम् । प्रशस्ता दशरात्रय इति मनुवचनात् । यामद्वयं शयान इति दक्षवचनाच्च ।

मार्कण्डये— "पश्चिमे प्रबलाचिन्ता हानिर्मृत्युस्तथोत्तरे ।"

हारीतः— न तिर्य्यगुदक् प्रत्यशिराः" तिर्य्यक् कोणः ।

विष्णुः-- नार्द्रपादः स्वप्यान्नोत्तराधरशिरा न नग्नो नानुवंशं न कोशे न पानाशे शयने । अनुवंशं मूर्द्धवंश दैर्घ्यानुसारि स्वदैर्घ्येण आकाशे अलम्बृते ।

हारीतः-- नान्यपूर्वे नास्मपीठोपधाने न प्रगे अन्यपूर्वेऽन्येनास्तरणानन्तरमुपभुक्ते । स्त्रियास्तु नायन्दोषः । पतिशयनानन्तरं शयनविधानात् ।

शङ्खः-- नान्यवर्णोपसेवितायामनभ्युक्ष्य न पर्वणि नभसोत्सवे । पर्व- प्रतिपत्पञ्चदश्योर्मध्यमुहूर्त्तम् । रभसोत्सवे - विवाहपुत्रजन्मादौ ।

नन्दिपुराणे--"नमो नन्दीश्वरायेति यः प्राक्स्वपते नरः ।
तस्य कूष्माण्डराजेभ्यो न भविष्यति वै भयम् ॥"

पठन्ति च-- "ये स्मरन्ति कष्फलेति तेषां चौरभयङ् कुतः ।"

विष्णुपुराणे-- "न स्नातान्तु स्त्रियङ्गच्छेन्नातुरां न रजस्वलाम् ।
नाविष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम् ॥
नादक्षिणां नान्यकामां नाकामां नान्ययोषिताम् ।
क्षुत्क्षामामतिभुक्तां वा स्वयञ्चैभिर्गुणैर्युतः ॥
नान्ययोनावयोनौ वा नोपभुक्तौषधिस्तथा ।
देव द्विज गुरूणाञ्च व्यवायी नाश्रमे वसेत् ॥
प्रोक्तपर्वसु शेषेषु नैव भूपाल सन्ध्ययोः ।
गच्छेद् व्यवायी मतिमान्न मूत्रोच्चारपीडितः ॥"

रजस्वलां दिनत्रयं न गच्छेत्, आबिष्टां भूतोन्मादादिना अप्रशस्तान्दुर्गन्धमलिनदेहवस्त्राम् गर्भिणीम्, षष्टममासयोर्न्नगच्छेदि ।

गौड़ाः - सकामात्वे मासान्तरे गम्याः, एभिः स्नातत्वादिभिः । अन्ययोनौ योनिभिन्नरन्ध्रे पाय्वादौ । अयोनौ - हस्तजङ्घादौ । युक्तञ्च तत् । "नोपेयाद् गर्भिणीं नारीं दीर्घमायुर्ज्जिजीविषुः" इतवचनेन निर्गर्भे च रजःपदार्थस्वरसात् । यद्वा—इदमुभयमयोनिपदार्थः । अन्ययोनिस्तिर्यग्योनिः, काली भ्रातृभार्यादौ क्षेत्रजार्थम् तद्योनिर्वा । आश्रमे- असाधारणविश्रामस्थले ।

मनुः - "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैस्साद्धं महोभिःर्मस्याद्विगर्हितैः ॥

हारीतः-- नान्यपूर्वे नास्मपीठोपधाने न प्रगे अन्यपूर्वेऽन्येनास्तरणानन्तर-मुपभुक्ते। स्त्रियास्तु नायन्दोषः। पतिशयनानन्तरं शयनविधानात्।

शङ्खः-- नान्यवर्णोपसेवितायामनभ्युक्ष्य न पर्वणि नभसोत्सवे। पर्व- प्रतिपत्पञ्चदश्योर्मध्यमुहूर्त्तम्। रभसोत्सवे - विवाहपुत्रजन्मादौ।

नन्दिपुराणे--"नमो नन्दीश्वरायेति यः प्राक्स्वपते नरः।
तस्य कूष्माण्डराजेभ्यो न भविष्यति वै भयम्॥"

पठन्ति च-- "ये स्मरन्ति कष्फलेति तेषां चौरभयङ् कुतः।"

विष्णुपुराणे-- "न स्नातान्तु स्त्रियङ्गच्छेन्नातुरां न रजस्वलाम्।
नाविष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम्॥
नादक्षिणां नान्यकामां नाकामां नान्ययोषिताम्।
क्षुत्क्षामामतिभुक्तां वा स्वयञ्चैभिर्गुणैर्युतः॥
नान्ययोनावयोनौ वा नोपभुक्तौषधिस्तथा।
देव द्विज गुरूणाञ्च व्यवायी नाश्रमे वसेत्॥
प्रोक्तपर्वसु शेषेषु नैव भूपाल सन्ध्ययोः।
गच्छेद् व्यवायी मतिमान्न मूत्रोच्चारपीडितः॥"

रजस्वलां दिनत्रयं न गच्छेत्, आविष्टां भूतोन्मादादिना अप्रशस्तान्दुर्गन्ध-मलिनदेहवस्त्राम् गर्भिणीम्, षष्टममासयोर्न्नगच्छेदि।

गौड़ाः - सकामात्वे मासान्तरे गम्याः, एभिः स्नातत्वादिभिः। अन्ययोनौ योनिभिन्नरन्ध्रे पाय्वादौ। अयोनौ - हस्तजङ्घादौ। युक्तञ्च तत्। "नोपेयाद् गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः" इतवचनेन निर्गर्भे च रजःपदार्थस्व-रसात्। यद्वा—इदमुभयमयोनिपदार्थः। अन्ययोनिस्तिर्यग्योनिः, कालौ भ्रातृ-भार्यादौ क्षेत्रजार्थम् तद्योनिर्वा। आश्रमे- असाधारणविश्रामस्थले।

मनुः - "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः।
चतुर्भिरितरैस्सार्द्धमहोभिःर्मस्याद्विगर्हितैः॥

तासामाद्याश्चतस्रश्च निन्दितैकादशी च या।
त्रयोदशी च शेषास्तु प्रशस्ता. दशरात्रयः।"

इतरैर्द्वैवपित्र्यकर्मविहितभिन्नैः। अत्र हेतुमहार्गर्हितैरिति। एवञ्च तैस्सार्द्धं द्वादश रात्रय इत्येवं षोडशरात्रकालः गर्भयोग्यः। चतुर्थ्येकादशी त्रयोदशीनां निन्दिताल्पायुरपत्यहेतुत्वान्निन्दितत्वम्। तेन रात्र्यन्तरे वैदेश्यादिसम्भवे तास्वपि योषिद्गम्या।

देवलः—"स्वदारानृतुषु स्नातान्नोपगच्छति यः पुमान्।
भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विनाशकः॥"

यमः—"ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति।
घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः॥"

सन्निधौ- सहवासे, स्वस्थः पञ्चदशेऽहनि विदेशादागतस्तु श्राद्धाधिकारी योषितं गच्छेत् श्राद्धाव्यङ्ग ब्रह्मचर्यलोपष्कार्य्यः। गुणलोपे त्वितिन्यायात्। मैथुनी शूकरो भवेदिति दुष्फलस्यापि भ्रूणहत्या-नरकमपेक्ष्य हीनत्वात्। एतादृशभिन्न एव मैथुननिषेधाच्च। न च सन्निधावित्येव बाधकाभावोपलक्षकः, स्वस्थ इत्यानर्थक्यापत्तेः।

अथ वर्णभेदान्नानर्थक्यमितिचेत्तथाप्युभयत्रोपलक्षकत्वे गौरवन्दोषः।

तथा— "अतीर्थागमनात्पुंसस्तीर्थसङ्ग्रहणात्स्त्रियाः।
उभयोर्द्धर्मलोपःस्याद् द्वेषेण तु विशेषतः॥
यौगपद्ये तु तीर्थानां विवाहक्रमणो व्रजेत्।
रक्षणार्थं सपुत्राम्वा ग्रहसङ्क्रमणोऽपि वा॥"

अतीर्थगमनात्- ऋतुगमनाभावादनृतुकाले निष्कामयोषिद्गनाच्च। तदाह—

बौधायनः—"ऋतौ नोपैति यो भार्य्यामनृतौ यश्च गच्छति।
तुल्यमाहुस्तयोर्द्दोषमयोनौ यश्च सिञ्चति॥"

स्त्रियाः सकामात्वे षष्ठाष्टममासौ विना गच्छेदित्याह—

वसिष्ठः-अन्यत्वो वा विजनिष्यमाणा स्त्रियः पतिभिस्सह शयीरन्निति तासा-मिन्द्रदत्तोऽपि वर इति विजयिष्यमाणाः सोष्यन्त्यः-- "पर्ववर्ज्जं व्रजेदेनां तद्व्रतो रतिकाम्यया" तद्व्रस्तद्रक्षणनियमवान् । रतिकाम्यया--निष्ठया ।

बृहस्पतिः- "सदैव वा पर्ववर्ज्जं स्त्रीणामभिमतञ्च तत् ।" स्त्रिया इष्टा-विरहे तु नानृतौ मैथुनी स्वेच्छया नाकामामिति प्रागभिनिषेधान्तरमाह मैवम्-रजोयोगे सति रात्रचतुष्टयपर्यन्तमेवं यामुपागच्छेदिति । अत्रानिष्टमाह--

उदक्याभङ्गे ये मांसहोपरिमिहे शूद्रतुल्या इति । दृष्टान्तमाह- ये चेति-पदद्वयेन, अनग्नयो नष्टाग्निहोत्राः त्रिरात्रम् ।

पाकमैथुनादौ लौकिके- "दैवेकर्मणि पित्र्ये च पञ्चमेऽहनि शुद्धयतीति" नाज्यांशे पुत्रयोरञ्जन न कुर्यात् । अस्तिवति सप्तमी तृतीयार्थे वृष्टिजलात्मक वारणाय बुद्धिपूर्वकत्वम्वा तदर्थः । ग्रहपदम् - सूर्यचन्द्रयोरपि वाचकम् । किञ्चिदभ्यङ्गगृहमार्ज्जनोपलेपनादि । खर्वेण निन्द्येन वामहस्तेन लोहिता-यसेन ताम्रपात्रेण ।

अत्र वामहस्ताञ्जल्योः सहज तोनिषिद्धयोः पुनर्निषेधो निन्दितायानिष्ट-सूचनाय । तदाह- तैत्तिरीयश्रुतिः-- "यामलवद्वासा भवति यस्ततोऽभिजायते सोभिशस्तोसामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यप्रगल्भो, या स्नाति तस्या अप्सु मारुको याऽभ्यक्ते तस्यै दुश्चर्मा । या प्रलिखते तस्यै खलतिरप-स्मारी,या अन्क्ते काणौ यदेतोधावते तस्यै श्यावदन या नखानि निकृन्तते तस्यै कुनखी, या किलति तस्यै क्लीवो, या रज्जु सृजति तस्या उद्बन्धुकोया पर्णेन पिवति तस्याउन्मादको, या खर्वेण पिवति तस्यै खर्वस्तिस्रो रात्रिव्रतञ्चरेद-ञ्जलिना वाऽपि वेद खर्वेण वा पात्रेण प्रजायै गोपीथायेति" ।

मलपदमत्र कर्दमादिपरम् , हारीतेन रजोरूपमलवद्वस्त्रधारणविधानात् । या नित्यानन्तरम् अभिगच्छतीतिशेषः ।

चतुर्थ्यः षष्ठ्यर्थे । पराचीमभिगमपराङ्मुखीन्त्यक्त्वाऽतिशतवतीं तस्या लज्जितस्वभावोऽप्रगल्भश्च पुत्रः , अपस्मारिको जलमज्जनेन मरणवान् , दुश्च-

र्मा द्भिन्नशिश्नाग्रः खलितश्केशहीनशिराः,अपमृत्युर्वकुलत्थ कृणति दीनताम्भजते। उद्बन्धकः ऊर्द्ध्वबन्धन रूपदन्तमार्जनम्। पर्णेन पलाशपत्रेण पत्रमात्रेणेत्यन्ये उन्मादकः उन्मादशीलः तिस्र इति। वामहस्तेनाञ्जलिना वा पात्रान्तरापिवेद्यदि तदा रात्रित्रयं न भुञ्जीतेत्यर्थः।

अथ खर्बेण दक्षिणकरात्मकेन पिवेदपत्य रक्षणाय इत्यन्तिमार्थः। स्नातीतिश्रुत्या उद्धृतोदकस्नानमपि बुद्धिपूर्वकमभिहितमित्यस्त्विति वचने अर्थोनाधारत्वमात्रमिति।

इति महामहोपाध्यायश्रीवामदेवकृते स्मृतिरहस्ये ब्राह्ममुहूर्त्तोपक्रमकाह्निकनिरूपणं समाप्तम्।

अथ वर्षादिकृत्याह्निकयोः प्रतिबन्धकत्वादशौचम् उदक्या स्नानप्रसङ्गाच्च स्नानादिशौचं निरूप्यते।

तत्र शौचाशौचधर्माधर्मात्मक इति वृद्धाः। तन्न, मूत्रोत्सर्गज्ञातिमरणादेरनिषिद्धत्वेन दशाहापगमादेव विहितत्वेन तदजनकत्वात्। चाण्डालोच्छिष्टोदक्यादिसंयोगध्वंसो भवति शौचमित्यन्ये। तदप्ययुक्तम्, स्नानाद्यनन्तरमप्यशौचस्य पुनश्चाण्डालादि संयोगानन्तरं शौचस्य नूतनपात्रस्यासंयोगम्विना शौचबिरहस्य च प्रसङ्गात्। अल्पसंयोगविद्यमानतादशायां शौचानुपपत्तेः।

अतएवास्पृश्यसंयोगप्रतियोगिकपात्रघटनकालीनाभावसमसङ्ख्यकाभावसमुदायः- स्वजन्मोत्तर वर्षारम्भकालीनज्ञातज्ञातिमरणानन्तरदशाहादिकालोपाधिप्रतियोगिकयावत्तावत्समसङ्ख्यकाभावसमुदायादिश्च शुद्धिरित्यतिनिर्घोपकर्षणघर्षणसम्बर्द्धक एव मिश्राणाम्। गङ्गाजलादौ चाण्डालसंस्पृष्टे ज्ञातिशून्यपुरुषे चाव्याप्तेरननुगमाच्च।

नव्यास्तु—दशाहादिकालतन्नाशावेव शौचाशौचे निरुक्तसमुदायविशिष्टोक्तसंयोगध्वंसश्च। पात्रविशेषशौचं नूतनभाण्डेप्यल्पसंयोगध्वंसानन्तरमेव शुद्धिः। विद्यमानेप्यल्पसंयोगे तत्संयोगानन्तरनाशाद्वा नाव्याप्तिरनुपादेयो

विशेष्यांश:। अननुगमश्च लक्ष्यभेदाद्याप्तिनिर्वचनवन्न क्षतिकर:। गङ्गा-जलादौ गङ्गाजलत्वादिकमेव शौचम्। पञ्चवर्षाभ्यन्तरवयस्कत्वादिकमेव च ज्ञातिमरणवतां शिशूनां शौचन्तु न्यूनशून्यत्वं चाशौचमिति निष्कर्षयति।

वस्तुतस्तु – चाण्डालसंयोगज्ञातिमरणोत्तरदशाहादि प्रथमकलायामपरत्वे दैशिककालिके अशौचरूपे जन्येते, सन्निकृष्टकनिष्ठापरत्वविलक्षणे अल्पसंयोग-मरणोत्तरदशाहादिचरमक्षणाभ्याञ्च विप्रकृष्टत्वज्येष्ठत्वविलक्षणपरत्वे जन्येते। अनयो: पूर्वजातस्य चरमजातनाशकमिदमेव मानम्। परत्वापर-त्वयोरपि चिकित्सं वैधर्मिणि चाशौचाभाव: कारणन्नतु शौचम्। मिश्रमतेऽपि नाव्याप्ते:।

अशौचनाशार्थं शौचमुपेयते वैदिककर्मणि प्रयोजकम्, नतु जनकम्। अशौचस्य च संसर्गाभावमात्रजनकं नोक्ताव्याप्तिस्थलासङ्ग्रह:। दशाहा-नन्तरक्षणे विद्यमानोऽशौचाभाव: शुद्धिसहोत्पन्नोऽग्रिमक्षणादौ वैधकर्महेतुसंयो-गजपरत्वापरत्वे दैशिके कालजे च कालिके द्वयोरिव तृतीयस्यापि परत्वस्यापर-त्वस्य विभाजकोपाधि: साधारण इति न चतुर्विंशतिगुणा इति सिद्धान्तव्या-घात इत्युन्नयाम:।

एवञ्चाशौचनाशकस्य प्रायश्चित्तमध्ये गननं निश्चितपापनाशकं हि प्रायश्चित्तम्। मङ्गलञ्च सन्दिग्धपापनाशकम्, भोगस्तु विधेयत्वान्न प्राय श्चित्तम्। तत्राह्निकस्नानादिषट् कथितानि तन्मध्ये शुद्धिस्नानं नैमित्तिक-मित्युक्तम्। तत्प्रपञ्च: प्रदर्शितो मया। तत्सङ्ख्यागताशौचप्रकरणं प्रदर्श्यते। मरणाद्यशौचप्रपञ्चस्यावश्यकर्त्तव्यतया प्रकरणानन्तरध्रौव्यात्।

मनु: – "दिवाकीर्तिमुदक्याञ्च सूतिकां पतितन्तथा।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति॥
आचम्य प्रयतो नित्यं जपेदशुचि दर्शने।
सौरान्मन्त्रान्यथोत्साहं पावमानीश्च शक्तित:॥
नारं स्पृष्ट्वाऽस्थि सस्नेहं स्नात्वा विप्रो विशुध्यति।
आचम्यैव च निस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविम्॥

शक्तित इत्यभिधानाच्छक्तौ नव, अशक्तौ त्वाद्यास्तिस्रः उदक्यां त्रिरात्रम्, सूतिकान्दशरात्रमध्ये चाण्डालादीनांश्चाशुचित्वेन निश्चये सति स्पृष्ट्वा स्नानाचमनमन्त्रजपान् कुर्यात् । अशुचित्वानिश्चये तु स्नानाचमनमात्रमित्यर्थः । तत्पदेन सन्निहित शवपरामर्शः । श्रीदत्तस्वरसोप्यत्र । मिश्रास्तु चाण्डालादे सर्वस्य परामर्शापरामर्शशील एव । रुद्रधरस्तु-- एतच्चाकामतः स्पर्शे ।

बृहस्पतिः—"पतितं सूतिकानन्त्यं शवं स्पृष्ट्वा च कामतः ।
स्नात्वा सचैलं हुत्वाग्निं घृतं प्राश्य विशुद्ध्यति ॥"

सचैलं-- स्पर्शकालीनस्पर्शपूर्वं शवस्पृष्टं शवं चेति चकारेण समुच्चिताः स्पर्शकालीनधृताशेषवस्त्रसहितं स्नानञ्चेदं जलाशये गृहे वेत्यभिहितमाह्निके ।

"शवस्पर्श निर्हार दाहेषु निमज्जन्ती"त्यभिधानाज्जलाशयसत्त्वे तत्रैवोचितम् । तदसत्त्वे त्वगत्या कूपोद्धृतजलेन ग्रामाद्बहिरिति विशेषः । नारमित्यकामकृत स्पर्शपरम् ।

ब्राह्मे--- "मानुषास्थितलं स्पृश्य स्निग्धमस्निग्धमेव वा ।
स्नायाद्वा संस्पृशेत्सूर्यम्पश्येद्विष्णुमनुस्मरेत् ॥"

संस्पृशेत्युपसर्गार्थाद् बुद्धिपूर्वकत्वम् ।

भिन्नास्थि अभिप्रेत्य वशिष्ठः--मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचमस्निग्धन्त्वहोरात्रम् । निस्नेह द्विजाहश्चातुर्वर्ण्येनशूद्रै श्च स्पर्शेत्वाह—

देवलः- "मानुषास्थि वसा विष्ठामार्त्तवं मूत्ररेतसी ।
मज्जानं शोणितम्बाऽपि परस्य यदि संस्पृशेत् ॥
स्नात्वापमृज्य लेपादीनाचम्य च शुचिर्भवेत् ।
तान्येव स्वानि सस्पृश्य पूतःस्यात्परिमार्ज्जनात् ॥"

मानुषेति - वसादावप्यन्वितम्, मार्ज्जनानन्तरं स्नानन्तत आचमनम्, परिमार्ज्जनादाचमनसंहितात्परवसादिस्पर्शो नाभ्यूर्द्ध्वं वङ्करभिन्ने चेत्तदा स्नानमन्यथा क्षालनाचमन एव । तदाह—

अङ्गिराः - "ऊर्द्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते।
तत्र स्नानमधस्तत्तु क्षालनेनैव शुद्ध्यति ॥"

मनुः - "वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत्।
आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम् ॥
अभ्युदितेषु च वान्तेषु श्मश्रुकर्मणि मैथुने।
दुःस्वप्ने दुर्ज्जनस्पर्शे स्नानमात्रं विधीयते ॥"

वान्तो - विरिक्त इति निमित्तम्, वमनविरेचनयोरेव विष्णुवचनात्। अभ्युदिते सूर्ये पर्युषिताजीर्णवस्त्रं स्नाननिमित्तम्। नन्वत्र घृतप्राशनम्वात्र मात्रमित्यभिधानादजीर्णे घृतप्राशनानौचित्यात् - पूर्वोत्र बलवद्धत्वेन तदौचित्यात् भुक्तस्यान्नस्य सद्योवमनमात्रे त्वाचमनमात्रम्। मैथुनिनः ऋतुकालाभिवासिनः मैथुन इति पुनरभिधानं घृतप्राशननिषेधार्थम्। दुर्जन - श्चाण्डालादिः।

गौतमः - शुनश्च यदुपुऽन्यादिगोचर शुनास्पृष्ट मधोदपक्षाल्य विशुद्ध्यति। नाभ्यूद्ध्वंस्पर्शे स्नानमपि आचमनत्रयबोधनम्।?

देवलः - "श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम्।
सूतिकां सूयिकाञ्चैव स्पृष्ट्वा शुद्धिमवाप्नुयात् ॥
श्वकुक्कुट वराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचैलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति ॥
अशुद्धान्नं स्वयमप्येतान् शुद्धश्च यदि स्पृशेत्।
उपस्पृश्याशुचि स्पृष्टं तृतीयम्वाऽपि मानवः ॥
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति ॥"

सूयिका - प्रसवकारयित्री। अस्नाता - शुनोव्यावर्त्तकत्वाद्ग्राम्यत्वमुपरञ्जकमात्रम्। समित्युपसर्गेण बुद्धिपूर्वकत्वमुक्तम्। तत्रैव सचैलमित्यन्वेति पुनः पुनर्यदि स्पृशेत्तदाकृष्णेन विशुद्धयति। उपस्पृश्येत्याद्यशुचि श्वपाकादि। तृतीयम् शवस्पृष्टिस्पर्शकम्। तेन - यस्य स्पर्शे स्नानम्, तत्स्पर्शे -चुम्बना लिङ्गनादाचमनं, स्पर्शमात्रे दोषाभावः।

बौधायनः-चाण्डालेन सहानुगमने सचैलस्नानम् सहेत्युपसर्जनत्वेन गमनन्दर्शयति-

स्मृतिः - "मूत्रोच्चारसमुत्सर्गे अहोरात्रेण शुद्ध्यति।
अस्पृश्य स्पर्शने चैव अभ्यङ्गे क्षुरकर्मणि॥"

सप्तम्यन्तार्थैकतरसत्त्वे तादृशोपात्तो सत्युपवासम्। एकत्रिचतुः सन्निपाते एकजातीयस्यापि पुनः पुनः करणेराकृष्टञ्कुर्यादित्यर्थः।

विष्णुः - "पञ्चनखास्थ्यस्नेहं स्पृष्ट्वाऽचामेच्च। चाण्डालम्लेच्छभाषणे कथिता, धूमसेवनेन सर्ववर्णाः स्नानमाचरेयुः मैथुने दुःस्वप्ने वमनविरेचकयोः स्मश्रुकर्मणिकृते शवस्पृष्टिञ्च स्पृष्ट्वा रजस्वलाश्वचाण्डालापूपांश्च भक्ष्यवर्ज्य पञ्चनख शवं तदस्थि सस्नेहञ्च, सर्वेषु एतेषु न पूर्व मवस्त्रमप्रक्षालितं विभृयात्। पञ्चनखेति - अभक्ष्येत्यादि।

पराशरः - "चित्यवृक्ष श्चितिर्यूपश्चाण्डालः सोमविक्रयी।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सचैलो जलमाविशेत्॥
श्वकाकैरवलीढस्य नखैर्विदलितस्य च।
अद्भिः प्रक्षालनं शौचमग्निना चोपचूडनम्॥"

प्रक्षालनम् - सर्वाङ्गानाम्, उपचूडनम् - शिरसि शिखायोजनम्। प्रक्षाल्य वा तन्देशमित्यापस्तम्वे। तनु नाभ्यधोऽवलेहतादौ क्षालनाचमनमात्रमुक्तम्। श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीवितम्। ग्रामयाजकं यूपं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहं मानुषास्थशवस्पृष्टं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचैलो जलमाविशेत्। उत्तीर्याग्निमुपस्पृशेत्ततो गायत्र्यष्टशतञ्जपेत्। घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत्। त्रिरिति - चुल्लुकत्रयमर्थः। करिहिन्यायेनोत्तार्थैकदेशाभिधानं त्रिराचामेदप इत्यत्र त्रिराचम्य उपस्पृशेदित्यत्र तथादर्शनात्। अत एव - सकृदाचमनस्यैवाभिप्रेतत्वात्। श्वपाकः - श्वखादकः, सङ्करजातिश्चाण्डालभिन्नत्वेन कश्यपोक्तः। आपः स्पृशेदित्यादिकमबुद्धिपूर्वक एव स्पर्शे-

हारीतः - श्वपच प्रेताहारमुष्टिकशवान् संस्पृश्य देवीराप इति तिसृभिरन्तर्ज्जले स्नानात् पूतोभवति अजीर्णवान्तश्मश्रुकर्माऽयोनिषु दिवामैथुने च । ब्रह्मचारिणमधिकृत्य -

पैठोनसिः - स्कन्दने छर्दने सचैलस्नानम् घृतप्राशनञ्च । काककेशमलने सचैलस्नानन् अनुदक - मूत्रपुरीषे सचैलस्नानम् । महाव्याहृति होमश्च । सस्नेहमस्थि संस्पृश्य सचैलस्नानम् । महाव्याहृति होमश्च । खरोष्ट्र चाण्डालादिस्पर्शे सचैलस्नानम् । स्कन्दने रेतः पतने काकस्य केशेन पक्षेणमलनं मर्दनम् अनुदकेति शौचानिष्पत्तिपरम् । अस्थि मानुषस्य कामतः सस्नेहं स्पृष्ट्वा -

ब्राह्मे - "अभोज्य सूतिकाषण्ढमार्ज्जाराखु श्वकुक्कुटान् ।
पतिताविद्ध चाण्डालान् घृताहाराश्च धर्मवित् ॥
संस्पृश्य शुद्ध्यति स्नानादुदक्याग्रामशूकरौ ।"

"मार्ज्जारस्तु सदा शुचि"रिति वचनात् । अपविद्धो - दोषातिशयेन ज्ञातिभि र्बहिष्कृतः । तत्र च दास्या कृतजलपूर्ण कुम्भस्य न्युञ्जीकरणयोन्नतिरसम्बन्ध इत्यभिधाय वामचरणेन । अस्यानन्तर तज्जातस्य वामचरणे सपिण्डादीनां नाशौचम्, नवा तन्मरणम् भङ्गलिङ्गेन भोज्यान्नत्वादिकम् । इदञ्च सर्वं बहिः करणे भरणासामर्थ्यादिना त्यक्तस्यान्यपरिगृहीतस्य कोपेनकेनचित्कृतघटापवर्ज्जनस्य चादुष्टत्वमेव ।

द्वितीयस्य तु भङ्गलिङ्गत्वाभावो शौचविरहः । घटापवर्ज्जनकर्तृमात्रस्येति मन्तव्यम् । कर्तृस्थात्कालिकी शुद्धिरिति चतुर्थादिदिनश्राद्धे तद्दिनजन्यरूपतद्दिनजन्यपरत्वम्वा कारणम् । नतूक्ताशौच विगम इति मन्तव्यम् । एवं - वचनानुसाराज्जन्मदिन षष्ठदिनयोर्द्दानेऽग्निहोत्रप्राणाहुति - देवपूजासु तत्तत्कालत्वादिकमेवाशौचमुपयुज्यते । रजस्वला स्नानशुद्धिसूतिकाशुद्धी प्रागभिहिते । चाण्डालादि स्पर्शे रात्रिमधिकृत्य —

शातातपः - 'अनस्तमित आदित्ये सङ्गृहीतञ्च यज्जलम् ।
तेन सर्वात्मना शुद्धि शिवंस्पृष्टन्तु वर्ज्जयेत् ॥"

दिवोद्धृत जलस्नानम् तेन जलाशये तदेव कूपोद्धृतजलै र्वा स्नानमिति पर्यवस्यति ।

पराशरः - "आचान्तमनुगर्त्तम्वा निशि स्नानं न विद्यते ।"

यमः—"आतुरस्नानप्राप्तौ च दशकृत्वस्त्वनातुरः ।"

आतुरपदमुदक्यासूतिकयोरप्युपलक्षकम् । सर्वत्र शुद्धयर्थस्नाने आत्मानमपि । शावस्नानमग्रे विवेचयिष्यते ।

आपस्तम्बः—"स्नानं नैमित्तिकङ्कार्यं देवपित्र्यविवर्ज्जितम् ।"

राहुग्रास -तीर्थप्राप्तिनिमित्तकं काम्यपरम् । क्रियास्नानमध्ये वा तयोर्निवेशः ।

अङ्गिराः –"इन्द्रियेषु प्रविष्टं यदमेध्यं यत्र कुत्रचित् ।
मुखेऽपि संस्पर्शगतं तत्र स्नानं विशोधनम् ॥"

विष्णुः – सुरभिर्मलरुद्धोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नाने चक्षुष्वपहत उपोष्य स्नानेन पञ्चगव्येन दशलक्षदोपहतञ्च पञ्चगव्येनाशितेन ।

ऋष्यशृङ्गः - "मद्यविण्मूत्र विप्रुड्भिः संस्पृष्टो मुखमण्डले ।
मृत्तिकागोमयैः स्नानात् पञ्चगव्येन शुद्धयति ॥"

## अथाचमनशुद्धिः

"रजकश्चर्मकारश्च व्याधजालोपजीविनौ ।
चेल निर्णेजकश्चैव नटशैलूषकस्तथा ॥
मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा ।
चक्री ध्वजी बध्यघाती ग्राम्यकुक्कुटशूकरौ ॥
एभिर्यदङ्गं स्पृष्टं स्याच्छिरोवर्ज्जन्द्विजातिषु ।
तोयेन क्षालनङ्कृत्वा आचान्तः शुचितामियात् ॥"

रजको - वस्त्ररङ्गकर्त्ता, शैलूषक ऐन्द्रजालिकः । चक्री - तैलिकः, ध्वजी - शौण्डिकः, वध्यघाती चराविबघनियुक्तः ।

मार्कण्डेये - कुर्य्यादाचमनं स्पर्शो गोपृष्ठस्यार्क्कदर्शनम् ।
कुर्वीतालम्भनम्वाऽपि दक्षिणश्रवणस्य च ॥
यथा विभवतो ह्येतत् पूर्वाभावे परं परम् ॥"

पराशरः--"पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ।
क्षुते निष्ठीविते चैव परिधानेऽश्रुपातने ।
कर्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत् ॥"

दक्षिणकर्णस्पर्शो विप्राणामेव । "विप्रस्य दक्षिणे कर्णे नित्यन्तिष्ठति देवता इति वचनात् । अन्येषान्तु सूर्यदर्शनम् ।"

गौतमः—दन्तश्लिष्टे दन्तवदन्यत्र जिह्वाभिमर्षणात् । प्राक्च्युतेरित्येके । च्युते चास्रावविद्व न्निगिरन्नेव तच्छुचिः ।

आस्रवो नाना निगिरन् उद्गिरन् छान्दस उपसर्गव्यत्ययः । उच्छिष्टत्वाप्रयोजकफलताम्बूलादिभागः क्रमशोऽनन्तरङ् क्रियमाणसायंसन्ध्याद्यङ्गायतनन्तद्भागं गिलित्वा कार्यमित्यर्थः । आचामेदित्यधिकृत्य—

शङ्खः- न शूद्रा सुपथावर्ज्जिताभिरद्भिः- एकपाणीति बहुव्रीहिः तृतीयार्थ कर्तृद्वाराऽन्वयार्थमेकपदसार्थकतार्थञ्चावसेयम् । शुद्धयर्थाचमनस्य पापानुत्पाद फलकस्य चक्षुतज्जलपानाद्यनन्तरविहितस्य नैमित्तिकाचमनस्य विस्तरोऽन्यत्र द्रष्टव्यः ।

"भवेदशौचमत्यन्तं तृणवेधाद्व्रणे कृते ।"

दन्तोपश्लिष्टानुकरणात् यतमानस्य व्रणजातेऽहोरात्रव्यापकमशौचमित्यर्थः ।

मनुः- "अन्नादीनां प्रवेशात्तु स्यादशुद्धि विशेषतः ।"

भविष्यसूर्योदयपर्यन्तमशौचजननान्न फलादिकश्च प्रवेशाद्भवतीत्यर्थः ।

पैठीनसिः-- भूमिगता विन्दवष्परामृष्टाः पूता विप्लुषः शुद्धा, द्विरोमक्लिन्नेष्वाचामेत् । भूमिसंलीना स्थूला अपि विन्दवोऽङ्गपतिताश्चैकरोमकूपक्लेदन क्षमाः । क्षुद्रविन्दवो नाचमनहेतवे रोमद्वयक्लेदकत्वादाचमनहेतव इत्यर्थः ।

मनुः- "स्पृशन्ति विन्दवः पादौ आचामयत तत्परान् ।
भूमिगैस्ते समाज्ञेया नातरुपहतो भवेत् ॥"

पृथगुपलभ्यमाना विन्दवः आचमनकरणे पादपतिताश्चाचमनहेतव एव ।

अत्रि- "मधुपर्क्के च सोमे च अप्सु प्राणाहुतीषु च ।
न च्छिष्टस्तु भवेत्तत्र यथाऽत्र वचनन्तथा ॥"

मधुपर्क्कप्राशने दक्षिणकरस्थ पवित्रं दक्षिण च विहायाङ्गान्तरं नाशुचि भवति तेन - वामकरं पादौ चाप्रक्षाल्येवाचामेत् । एवं सोमप्राशनेऽपोशान जलपानेप्राणाहुत्यशने च कृते ग्रामान्तरमकृतवतोऽपि वामहस्तपादप्रक्षालनम्वि- नैवाचमनम् । एषु चतुर्षु स्पर्शकारी परो न दुष्यति नवा दिवापुनर्भोजने दोषः । एकभुक्त श्राद्धदिनेऽपि प्रत्यपोशानं विनाभोजनस्यानिर्वाहात् । नवा परेण स्पृश्यमानस्य तत्करणे दोषः । विवाहमधुपर्क्काशने सदाचारोप्येवम् । नचैतन्मात्रे चिकीर्षिते भोजनाचार द्विराचमनं प्राक् ।

श्रीदत्तानुसारिणस्तु-'पीत्वापोध्येष्यमाणश्च आचामेत्प्रयतोऽपिसन् । इति वचनाज्जल पयसामन्त्ये नैमित्तकमाचमनम् नत्वशौचनाशकमेवं मधुपर्क- प्राशनसोमयोः- प्राणाहुतिपदार्थहुतशेषाज्याशनार्थकः । आत्मद्युतश्रुत्या घृत- स्य प्राणपोषकत्वेन प्राणपदस्यापि कथञ्चिदायुःपदस्येव तत्प्रतिपादकत्व- बोधनात् । सत्त्वात्प्राणरूपमाहुतिषु प्रत्यपोशानमेव समस्तपदार्थः । आपोमयः प्राणइति छान्दोग्यसम्वादात् । अथवा तृप्तस्य सायंप्रातर्मनुष्याणामशनमिति नित्यविधिपालनाय शुद्धप्राणाहुतिषु जलादिनाकृतेष्वित्यर्थः ।

हारीतः- "कषाय कटु ताम्वूले भुक्तस्नेहानुलेपने" । नोच्छिष्टो भवती- त्यनुवर्तते ।

कषायकटुनो र्विशेषमाह । शातातपः-

"दन्तलग्ने फलेभक्ष्ये यथास्नेहस्तथैव च ।
ताम्वूले चेक्षुखण्डे च नोच्छिष्टो भवति द्विजः ॥"

कटुकषायरूपे फलमूले ताम्बूले चेक्षुखण्डे च भुक्ते नोच्छिष्टो नवा तस्मिन्दन्तलग्ने तदीयस्नेहेमुखगते वोच्छिष्ट वचनयोरर्थः।

इदन्त्ववधेयम्-- जनपदे नेक्षुरस दुग्धमधुघृतान्यपि द्रुतत्वे नाभिधीयन्ते। अन्यत्र फलमूलेभ्य इत्यपि कटुतिक्तपरमेव भुक्ते पीतमपीतवदित्यपि दुग्धादि-शकल विषं पिबामीत्यस्यापि भुक्तम्वेति शेषः। तेनाभुक्ते कटुतिक्तयोः फलयो-स्ताम्बूलेक्षुखण्डयोर्वा भक्षणे पुनर्भोजनं दोषावहम्। भोजनोत्तरन्तु तेषां भक्षणं न तथा तिक्तफलमूलयोरपीयं व्यवस्थेति निबन्धारस्तत्र मूलं चिन्त्यम्, मधुराम्ललवणेषु रसेषु भोजनानन्तरं नैकभक्तादन्नाशनमुच्छिष्टदोषेतिदिक्।

अथ प्रसङ्गेन जननमरणयोरशौचं निरूपणीयम्। तत्रापि प्रेत्यभावपरी-क्षायामादौ प्रायणस्य कथनात्तदशक्तौ जननेऽतिदेशात्प्रथमं मरणाशौचंनिरूप्यते-

मनुः- "सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्।
मातुर्वा सूतकं प्राहुरुपस्पृश्य पिता शुचिः॥"

सर्वेषामशौचानां सपिण्डसकुल्यगोत्रजमातुलश्वशुरादीनां शावन्तिको सञ्चिरेण वा शवश्रवणाज्जातमशौचङ्कालक्रमेणानपकर्षणास्पृश्यतानिदानत्वे सर्वाशौचव्यापकत्वेन प्रकृष्टमशौचं स्नानापनेयम्। उपसगार्थोऽञ्जलिपर्य-न्तावस्थानमशौचस्य द्रढयति। एवञ्च दशवर्षानन्तरमपि स्नानमशौचान्त-कृत्यम् शय्यादानैकादशाहादि निराबाधम्। सूतकस्नानापनेयताऽपि सपत्नीमातु-रित्यर्थः। वा शब्द एवकारार्थः। अशौचपदमनुवृत्य- सूतकान्वितम्। तदर्थस्त्वस्पृश्यता निदानत्वम्। सूतिकां पुत्रजननीं त्रिंशतिरात्रेण स्नातां सर्व-कर्माणि कारयेत्, मासेन स्त्रीजननी मित्युदयकालकरिष्यमाणस्नानपूर्वं वैदिकश्राद्धादि लौकिक पाकाद्यनधिकारेष्यस्पृश्यता प्रयोजकमशौचं दशाहान-न्तरस्नाननिवृत्यर्थमेव। "सूतिका सर्ववर्णानान्दशरात्रेण शुद्ध्यतीति"वचनात्। मरणानन्तरञ्चा स्पृश्यताप्रयोजकमशौचश्रवणोत्तरसचैलस्नानं निवर्त्य सान्नि-ध्यविद्यमान सपिण्डानां पूर्णाशौचञ्च तृतीयांशव्यपगमोत्तरस्नाननिवर्त्यञ्च।

द्वितीयमस्पृश्यताबीजाशौचम्, तदाह—

देवलः — "अशौचकालाद्विज्ञेयं स्पर्शनञ्च त्रिभागतः।"

अङ्गिराः – चतुर्थेऽहनि विप्रस्य षष्ठे च क्षत्रियस्य च।
अष्टमे दशमे चैव स्पर्शःस्याद्वैश्यशूद्रयोः ॥

चतुः सम्बर्त्तर्थेऽहनि दशमुहूर्त्तानन्तरं षष्ठे षष्ठेसम्बन्धिदिनप्राक्तन अष्टदिनेभाविनि वा पञ्चमेऽहनि प्रथममुहूर्त्ते। यद्वा - पञ्चदशाहाशौचभागिनिरग्निक्षत्रियपरम्। यथाश्रुतमेवषष्ठ इति अष्टमपदार्थोऽपि षष्ठदिनप्रथममुहूर्त्तः चरमदिनप्राक्तनाष्टमदिने भाविनीति समन्वयात्। अथवा - विंशतिरात्राशौचं वैश्यपरम्। यथाश्रुतमष्टम इ त समभागे सम्भवेन सप्तरात्रस्य तृतीयभागत्वात् दशमेऽतीते एकादशदिनाद्यमुहूर्त्तः। स्पृश्यस्यापि कर्मविशेषप्रतिबन्धकमशौचमाह—

मनुः – "शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति॥
जननेप्येवमेवस्यान्निपुणं शुद्धिमिच्छताम्।"

बृहस्पतिः— "दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः।"

सपिण्डा विप्रा एव, अन्येषान्तु मनुवचनेनैव सपिण्डानां द्वादशाहादिविधानात्। त्रिरात्रेण इत्यादि चतुर्वर्णपरमसङ्कोचात् - मरणाशौचमात्रपरम् गोत्रजा स्नानाभिधानात्। प्रेतसूतक इति द्वन्द्वः मनुसम्बादात्, तत्पुरुषे लक्षणाप्रसङ्गात्। एवञ्च जननेप्येवमिति सपिण्डाशौचस्यैवातिदेश इति न सकुल्य जन्मन्यशौचम् प्रेतपदञ्चमत्वर्थीयाच् प्रत्ययान्तम्।

तेन कर्मधारय इति लक्षणेति केशवमिश्राभिवेशोत्र। "जन्मन्येकादशान्तु त्रिरात्राविष्यत" इति मेधातिथिव्याख्यातमनुवचनात्। स्नात्वेति, दशपुरुषावधिकव्यवहितकुलजास्तादृशस्य मरणे। पुत्रस्य जन्मनि च पितास्नानेन शुद्धः, कर्मार्हतायाः स्पृश्यत्वस्याश्रय इत्यर्थः।

केचित्तु - एकादशादित्रयव्यवधाने पक्षिणीसमाप्यन्तु इति वक्ष्यमाणमशौचं चतुर्दशादित्रयव्यवधाने सद्यः शौचमित्यर्थः। यद्वा - जन्मनाम ज्ञाना-

ज्ञानयोः पक्षिणीमन्यः शौचे त्रयोदशपर्यन्तव्यवधान इति एवेत्यर्थ इत्याहुः। आद्ये चतुर्दशादिव्यवहितस्याशौचबोधकश्रुते त्वनन्विते गोत्रजपक्षिणीबोधकश्रुतेः सपिण्डसकुल्यवैलक्षण्यबोधिकायाः कल्पने गौरवग्रासात्। सोदरयोरनभिज्ञत्वाद्यशौचविशेषपरिग्रहस्य सदाचाराविषयत्वाच्चेत्युन्नयामः।

देवलः— "शूद्रस्य त्रिशता शुद्धिः विंशत्या दिवसैर्विशः।
राज्ञः पञ्चदशाहेन दशभिर्ब्राह्मणस्य तु ॥
ग्रन्थार्थतो विजानाति वेदमङ्गैस्समन्वितम्।
सङ्कल्पं सरहस्यञ्च क्रियावांश्चेन्न सूतकम् ॥
एक द्वित्रिगुणैर्युक्तो चतुस्त्वेकदिनैः क्रमात्।
सर्वेऽपि सर्वयोगेन सद्य. शौचाः प्रकीर्त्तिताः ॥"

वृहस्पतिः— "त्रिरात्रेण विशुद्ध्येत्तु विप्रो वेदाग्निसंयुतः।
पञ्चाहेनाग्निहीनस्तु दशाहाँ ब्राह्मणब्रुवः ॥"

गौतमः— शावमाशौचमेकादशाहं क्षत्रिये ।

अङ्गिराः- "गर्भाधानादि संस्कारैर्युक्तश्च नियमव्रतैः।
नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुवः ॥"

याज्ञवल्क्यः— "त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः।" न्यायवर्त्तिनमाह

मनुः— "शूद्राणां मासिकङ्कार्यम् वपनं न्यायवर्त्तिनाम्।
वैश्यवर्णाश्च कल्पस्तु द्विजोच्छिष्टन्तु भोजनम् ॥"

ब्राह्मे— "शौचाशौचं प्रकुर्वीरन् शूद्रवद्वर्णसङ्कराः।"

शातातपः- "शूद्रो विंशतिरात्रेण शुद्ध्येत मृतसूतके।"

शङ्खः- "मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निना।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः ॥"

एवकारेण मरणान्त्यदिने चेद्दाहस्तदा दाहादिदिनं नाशौचावधिर्निरग्नौ

प्रेत इत्युक्तम् । दिनान्तरे दाहादिर्निषिद्धः ।

दक्षः- "सद्यश्शौचन्तथैकाहस्त्र्यहश्चतुरहस्तथा ।
षड्दशद्वादशाहाश्च पक्षो मासस्तथैव च ॥
मरणान्तस्तथा चान्यद्दशपक्षास्तु सूतके ।
व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ॥
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ।
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ॥
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकम्भवेत् ।
नासूतकं कदाचित्स्याद्यावज्जीवन्तु सूतकम् ॥"

कश्यपः—"रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेवदिनङ्ग्राह्यं यावन्नैवोदितो रविः ॥"

ब्राह्मे—परपूर्वा गृहे यस्य भार्या स्यत्तस्य नित्यशः ।
अशौचं सर्वकार्येषु गेहे भवति सर्वदा ॥
दानं प्रतिग्रहो होमः सर्वन्तस्य वृथा भवेत् ॥

विप्रो राज्ञ इति नर्गुण परम् । गुणाश्चत्वारः । षडङ्गोपनिषदश्च । वेदज्ञानम् - तदर्थज्ञानम् । स्मार्त्ताग्निः श्रौताग्निश्चेति । तत्रैकगुणवन्तश्चतुर्भि, गुंणद्वययुक्तास्तुत्रिभिरहोभि स्त्रकगुणवन्तो विप्रा एकाहेन, गुणचतुष्टयकस्तु सद्यः शुद्ध्यति । अह्नैकपाणौ पञ्चभिः रहस्यमुपनिषत्, क्रियावानावसथ्य श्रौताग्निमतो न सूतकम् । सद्यःशौचभिन्नम् । अग्निहीनस्यार्थादिङ्गहीनसम्पूर्णवेदः साङ्गार्थहीनवेदविदश्चतुरहाशौचम् ।

एवञ्च परिशेषाद्वेदैकदेशविदः षड्ङ्गदक्षोत्तवेदाग्निमतः क्षत्रियस्य एकादशरात्रम् पैठीनसिनोक्तम् । वैश्यस्य तु विंशतिरात्रमुभयहीनस्य वेदाग्न्येकतरवतः पञ्चदशाहमुभयवतस्तु - सर्वेषामपि दशाहत इति वचनाद्दशरात्रम् । सर्वगुणवतः सद्यःशौचम् । वैश्यस्य क्षत्रियस्य च सर्वेऽपि सर्वयोगेन इत्युक्तत्वात् ।

मासिकं कृष्णादि मासान्त्यतिथि कर्त्तव्यम्। द्विजोच्छिष्टं द्विजभोजनानन्तरं पाक पात्रेऽवशिष्टम्। वर्णासंकरा अनुलोमजा। विलोमजानान्तु मातृजात्युक्तमशौचाम्। मातृतो जातिकल्पना इति वचनस्वारस्यात्। विंशतीति स्वकर्म सदाचारपर विषयम्। जातिमात्रशूद्रन्यायवर्त्ति - शूद्रयोस्तु त्रिशत्पञ्चादशरात्र उक्ते। वितानः - श्रौत्राग्निः। दशेति न्यूनसङ्ख्याव्यवच्छेदपरम्। यद्वा - सज्योतिपक्षिण्यावेकाहपदे - पञ्चाहं चातुरहपदेन कथञ्चिदुपगृहीतम्। दशाहपदेनैकादशाहम्, पक्षपदेन - विंशतिरात्राशौचाङ्गृहीतम् षोडशरात्रञ्च। सूतके जनने मरणे वा सपिण्डानाम्।

व्याधितस्य नित्यकर्म बिरोधिव्याधिमतः सर्वदेति नित्यश इति षष्ठयन्तेष्वन्वेति।

देवलः—"आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन्।
लोभाद्यः प्रचिनोत्यर्थान् स कदर्य इति स्मृतः॥

क्रियाहीनस्य व्याधि कदर्यते विनाऽऽलसत्वादिना नित्यक्रियाविमुखस्य ? स्त्रीजितस्य भार्यावशतया गुर्वादिसेवाविमुखस्य परपरिपीडिततयाऽश्रित्य वशीकृतस्य च। व्यसनम् - द्यूतमृगयामद्यादिसेवनम्। परो - राजादिः। त्यागो - वैश्वदेवादिः। भस्मान्तमिति व्याचष्टे यावज्जीवमिति। गृहेऽधिष्ठात्री, प्रतिग्रहो - वृथेत्यनेन - तत्सम्प्रदानकदाने वृथात्वयुक्तम्। होम इत्यनेन गुरुतयायजमानतया च होमकर्तृत्वं निषेधति।

स्वाध्यायस्तत्कर्तृकवेदाध्ययनाध्यापने तत्कर्मकाध्यापनञ्च होमपदेनोपलक्ष्यते। सर्वं वृथेति स्वरसात्।

शङ्खः—"हीनवर्णा तु या नारी प्रमादात्प्रसवं ब्रजेत्।
प्रसवे मरणे तज्जमशौचं नोपशाम्यति॥"

प्रमादात् - परिणयम्विना कृतान्मैथुनात्। नार्य्यास्तस्याः प्रसवादावभिगन्तुरशौचम्।

पराशरः—"सम्पर्काद्दुष्यते विप्रो जनने मरणेऽपि च।
सम्पर्कं विनिवृत्तानां न प्रेतं नैव सूतकम्॥"

सम्पर्कोऽशौचिना सह शयनभोजनादिः, सूतिकया भार्य्यया सह मैथुनञ्च। तत्रान्त्ये स्पृश्यता दशाहम् तदन्ते च सचैलस्नानम्। सम्पर्क निवृत्तावस्पृश्यत्वं निषेधतासम्पर्केऽस्पृश्यावगमात्। स्पृश्यस्य सचैलस्नानम्।

"सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः।
कृत्वा सचैलस्नानञ्च शुद्धो भवति तत्क्षणात्॥"

इति ब्रह्मपुराणाच्च।

"नाशौचं सूतके पुंसः संसर्गञ्चेन्न गच्छति।"

इत्यङ्गिरोवचनन्तु कन्याजन्मपरम्। विनिवृत्तानां वेदादिगुणवतां प्रेतसूतके रात्रादिकेन भवतः। सर्वश्चाय मशौचापकर्षो नित्ये सन्ध्या पञ्चयज्ञ वैधस्नान तर्पण स्वाध्यायाग्निहोत्रेषु नित्येषु। नतु श्राद्धदानप्रतिग्रह काम्यहोमेष्विति मिताक्षरादयः।

वस्तुतस्त्वशौचे निषिद्धानां सर्वेषामविशेषादशौचह्लासवद्धिः करणमविरुद्धमिति तत्त्वम्।

## अशौचोपयोगि सापिण्ड्यम्

मात्स्ये—"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदस्सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥"

पिण्डभागिनः - पिण्ड पितृ यज्ञीयत्यागोद्देश्याः। तेषां सप्तानां पिण्डसम्बन्धिनः सप्तपुरुषानभिव्याप्य सापिण्ड्यमित्यर्थः। एवञ्च स्व स्वत्यक्त पिण्डोप भोक्तृ योग्य पिण्डदत्वंलक्षणार्थः। सप्तान्यतमापेक्षया सप्तमाद्यन्यतमत्वंपर्यवस्यति। एकस्याप्यष्टमत्वे लक्षणं नास्ति। अत एवासपिण्डे मृते त्रिरात्रमित्यस्य दशाहेन सपिण्डा इत्यस्य च न विरोधः। अन्यथा - सप्तमस्याष्टमे मृते विरोधोऽशौचे प्रसज्येत। अतएव दशाहं सपिण्डेषु मृतेष्विति दशाहेन सपिण्ड इत्युभयनिष्ठं सापिण्डयमशौचवीजमभिहितम्। एवं सकुल्यत्वमप्यष्टमादित्रयान्यतमत्वमुभयनिष्ठमशौचवीजम् त्रिरात्रेण

सकुल्या इति । असपिण्डे मृते त्रिरात्रमिति वचनाभ्यामभिहितम् । अन्यथा दशमस्यैकादशे मृते स्नानमात्रेण एकपिण्डस्वधानामादशमाद्धर्मविच्छित्ति रिति वचनात्तु त्रिरात्रेण शुद्धिरिति बिरुद्ध्येत । सप्तमाष्टमयोः सकुल्यत्वमेव परस्परं दशमैकादशयोस्तु गोत्रजस्तु गोत्रजमित्युन्नयामः ।

यत्तु संयोगवन्निवर्त्तत इत्यभिहितम् । तत्तुच्छम् । संयोगो हि गुण आश्रयनाशान्नश्यति । अन्यतमत्वादिकमुपाधिस्तु न तयेति दिक् । गोत्रजत्वमेकादशाद्यन्यतमत्वमेकं चतुर्थीहोमोत्तरविवाहपूर्वसप्तपदाक्रमाग्निपरिक्रमणजन्य पत्नीगोत्रपरस्परासम्बन्धवत्वम् । पत्युस्तच्च पुत्रजन्मोत्तरास्पृश्यत्ववीजमित्युक्तम् । स्त्रियास्तु पिण्डदानकरणे पतिसाहित्यात्पिण्डभोक्तृत्वाच्च लक्षणसमन्वयः ।

पिण्ड पितृ यज्ञाकर्त्तुः सन्यासि पतित पितामहादिकस्य चाव्याप्त्यतिव्याप्तयोग्यता सन्यासादि बाधकाभावयो विवक्षया निरसनीया योग्यतावच्छेदकञ्च त्रैवर्णिकत्वम् । शूद्रस्तु सपिण्डत्रयमेव लक्षणघटकम्, मातामहादि पिण्डाप्रवेशान्नातिप्रसङ्गः ।

यत्तु – सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥

सप्तमेऽष्टमे जन्मनाम्नोः सप्तान्यतमीयत्वेनाप्रमिताबमाव इति यावत् ।

ब्राह्मे – "सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी ।
सपिण्डता ततः पश्चात्समानोदकधर्मता ॥
ततः कालवशात्तत्र विस्मृते गोत्रनामभिः ।
समानोदकसंज्ञा तु तावन्मात्रा विनश्यति ॥"

विस्मृतेर्दशमपर्यन्तीयत्वेनाप्रमितैर्दशमपर्यन्तभिन्नै रिति यावत्, तावन्मात्रा दशान्यतम मात्रवर्त्तिनी विनश्यति न विद्यते ।

सुमन्तुः – ब्राह्मणानामेकपिण्ड स्वधानामादशमाद्धमविच्छित्ति र्भवत्या-

तृतीयात्। स्वधाविच्छित्ति र्भवत्यासप्तमादूर्ध्वविच्छित्ति र्भवत्यन्यथा पिण्डशौचक्रियासु छेदाद् ब्रह्महतुल्यो भवति। धर्मविच्छित्तिर्दिनव्यापकमशौचं जीवत्पित्रादित्रिकत्वे सत्येकदत्तपिण्डत्यागान्वयिनाम् आतृतीयात् स्वपूर्वपुरुषत्रयपर्यन्तानन्तरं मृतपितृकादित्रयस्य, जीवत्पित्रादिकस्य तु तदूर्ध्वं पुरुषत्रयानन्तरं स्वधात्यागे द्रेश्यत्वम् आसप्तमात् स्वेनसह सप्तमपुरुषानन्तरं पूर्वस्य परस्य च। अन्यथेति पुरुषत्रयस्य पिण्डेऽदत्ते दशमपर्यन्तं दिनव्यापकाशौचनिवृत्यनपेक्षमाणे सप्तपुरुष पर्यन्तस्य त्रये विभागाकरणे च शास्त्रोक्तपिण्डशौच विभागोच्छेदकत्वे न ब्रह्महा भवतीत्यर्थः।

शङ्खः—"यद्येकजाता बहवः पृथक् क्षेत्राः पृथग्धनाः।
एकपिण्डाः पृथक् शौचाः पिण्डस्तु वर्त्तते त्रिषु॥"

पृथक् क्षेत्राः—पित्रप्रकृष्टक्षेत्रजाः। पृथग्धना - पितृ सवर्ण पुत्रन्यूनभागाः।पृथक्शौचाः - मातृजात्युक्ताशौचिनः। त्रिपुरुषम् - पितृकुल सपिण्डाः।

ब्राह्मे —'सपिण्डता तु सर्वासां कन्यानान्तु त्रिपौरुषी।
अप्रत्तानां तथा स्त्रीणां सापिण्डयं सप्तपौरुषम्॥
प्रत्तानां भर्तृ सापिण्डयं प्राहदेवः प्रजापतिः॥"

कन्यानाम् - कुमारीणाम्। अकृतवाग्दानानाम्। अप्रत्तानामकृतवाग्दानानाम्। त्रिपुरुषमिति। वसिष्ठ वचनन्तु - वाग्दानोत्तरमनूढानां त्र्यहम् दर्शयति। सपिण्डमरणमपि भङ्गलिङ्गम्। तत्र त्रिपुरुषमिति - वाक्प्रदाने कृते तस्मिन्ज्ञेयन्तूभयतस्त्र्यहम्।

पितुर्वैरस्य च ततो दत्तानां भर्त्तुरेव हि।
स्वजात्युक्तमशौचं स्यात्सूतके मृतकेऽथ वा॥
दत्तानारी पितुर्गेहे सूयते म्रियतेऽथ वा।
स्वमशौचञ्चरेत्सम्यक् पृथक्स्थाने व्यवस्थिता॥
तद्बन्धुवर्गस्त्वेकेन शुद्ध्यते जनकस्त्रिभिः।
पित्रा दत्ता तु या कन्या स्वातन्त्र्यादन्यमाश्रिता।
यंयं श्रितवती भूयस्तस्याशौचं त्र्यहं त्र्यहम्॥

कालादक्षतयोनिश्चेदन्यगत्या व्यवस्थिता ।
तस्यान्यस्य सगोत्रस्य सा यत्राश्रितवत्ती स्वयम् ॥
पदे तु सप्तमे या तु बलात्काचिद्धृता भवेत् ।
स्वामिगोत्रं भवेत्तस्यास्तच्च भूयो विशिष्यते ॥
पैतृकन्त्वप्रसूतायास्ततः पौर्विकभर्तृकम् ।

चूडान्तन्तृतीये वाऽप्रतिहत इति विहितकालं पूर्वम्वर्ष पर्यन्तमिति यावत् ।

दत्ताना सङ्कल्पितानां पृथक् स्थाने स्वामिगृहादन्यत्र व्यवस्थिता चेत्सूयते म्रियते वा तदा स्वजात्युक्तं भर्तृकुल एवाशौचम् एवहीत्येवकारेण सूतके मृतके च एवहीत्येवधारणद्वयेन दिनव्यापकस्नानापनेययोरशौचयोर्व्यवच्छेदः । पितृकुले यदि तु पितुर्गेहे सूयते म्रियते तदा -पितुः कुलेप्यशौचम् । तत्रायं विशेषः - पुंस्त्वस्याविवक्षणान्मातापित्र्योस्त्र्यहम्, प्रसवमरणस्नानाश्रमस्थिता मातृभगिन्यादयस्त्वेकाहेन शुद्ध्यन्ति । एकाश्रमस्थत्वमश्रुतत्वादविवक्षितम् । बन्धुपदार्थश्च : सपिण्डपुरुषत्रयपर्यन्त इति तु वयम् । अक्षतयोनिश्चेदित्यभिधानङ्कृतसङ्गमायाः पादत्रिन ग्राहकगोत्रम् । तत्सपिण्डाशौचबीजम् प्रसवमरणत्वञ्च गमयति ।

विशिष्यते - विशेषविषयतया वर्ण्यते । अप्रसूतायाः पितृगोत्र प्रसूतायाः पाणिग्राहकगोत्रमिति । यस्य च गोत्रम् तस्य कुलेन सापिण्ड्यमशौचञ्च जात्युक्तं भर्तृकुले चेति विशेषः । इदञ्च वाजसनेयि परिणीतायामन्यस्यामप्यक्त लाजहोमायाञ्चतुर्थीहोममन्त्रेणाद्यो यः लाजहोमेनान्यस्याम्पतिगोत्रप्राप्तेः । एवञ्च त्रिष्परिक्रमणादग्नेः हृदयालम्भनात्तथा स्वामिगोत्रं भवेत्तस्या इति हारीत वचनेन लाजहोमप्राप्तगोत्रायाः ।

कौथुमिः—योषितश्चतुर्थ्यनन्तरं प्राप्तगोत्राया वाजसनेयियोषितश्च बलाद्धरणे पतिगोत्रमप्रत्यूहमित्यवधातव्यम् । तत्र च पितृकुले सप्तपदी भर्तृकुले चाशौचविरहः ॥

शङ्खः—"पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता ।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥

कन्याबाल मृतजात जातमृत विदेशमृत जलाग्न्यादिमृताशौचानि सद्यः शौचभिन्नानि सपिण्डानामेव । अन्येषान्तु सद्यश्शौचमेव । अनूढायामेव रजोयोगे पितुर्यावज्जीवमशौचमित्यर्थः । गर्भस्रावेत्वाह—

ब्राह्मे – "षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
अतऊर्ध्वं स्वजात्युक्तमशौचं तासु विद्यते ।
सद्यश्शौचं सपिण्डानां गर्भस्य पतने सति ॥"

त्रिरात्रं रजस्वलाऽशुचिर्भवतीति वसिष्ठेनोक्तम् । चतुर्थपञ्चमषष्ठेषु माससमसङ्ख्यैरहोभिरित्यनेनोच्यते । तासु - गर्भस्राववतीषु । मासत्रयमध्ये-गर्भस्रावे स्त्रीणामशौचमाह—

मरीचिः – "गर्भश्रुत्यां यथामासमचिरे तूत्तमे त्र्यहम् ।
राजन्ये तु चतूरात्रम् वैश्ये पञ्चाहमेव च ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ।"

हारीतः—"जातमृते मृतजाते वा त्रिरात्रम्" । स्त्रीणामित्यनुवृत्तेरिदमशौचम् । गर्भिण्या एव षण्मासानन्तरं गर्भस्थस्य मृतस्य पतने जननाव्यवधाने मरणे वा भवति । तथा जातमृते मृतजाते वा त्रिरात्रङ्कुलस्य ।
यमः—अहोरात्रं त्र्यहं वा गर्भसंस्रावे ।

कौर्मे- 'जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः ।
मातुश्च सूतकन्तत्र स्यात्पिता स्पृश्य एव हि ॥
सद्यश्शौचं सपिण्डानाङ्कर्तव्यं सोदरस्य च ।
एकरात्रं सपिण्डानां यदि तेऽन्त्यन्तनिर्गुणाः ॥

यदृच्छाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः ।
पितृ मात्रोः सदाचार भ्रष्टे सपिण्डानां त्र्यहम् ॥"

सोदरस्य निर्गुणसपिण्डानाञ्च एकाहम् । सोदरान्यगुणवत्सपिण्डानां स्नानापनेयमशौचम् । पितुश्च पुत्रजन्मनिमित्तकमस्पृश्यत्वन्नास्ति । इदञ्च-"रजस्युपरते साध्वी स्नानेन स्त्रीरजस्वला" इति मनुवचनेन चतुर्थदिनस्नान-बोधकेन व्यक्तम् ।

केचित्तु- "सूतिका सर्ववर्णानां दशरात्रेण शुद्ध्यति" इति वचनात्तज्जनन्या दशरात्रमाहुस्तदसत्, तद्वचनस्य जातमृतान्यप्रसूतीपरत्वात् । यथा - पितुः स्नानबोधकवचनस्य षष्ठमासे षड्दिनानि सप्तमादौ त्रीणीत्यनौचित्यन्तु वचन-बलादप्रयोजकम् । यथा - शूद्रया द्वितीय तृतीय मासयोरष्टभिश्चतुर्थे मासि गर्भस्रावे चतुर्भिरहोभिरित्यत्रेत्युन्नयामः ।

## अथ जातमृतान्यबालादिमरणे

याज्ञवल्क्यः- "आदन्तजननात्सद्य आचूडान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरम् ॥"

दन्तजन्म सप्तमे मासीतिश्रुतेस्तत्पूर्ववर्षमासपर्यन्ते बाले मृतेसद्यश्शौचम् । वर्षद्वयमध्ये मृते अहोरात्रम् । षष्ठवर्षमध्ये मृते त्रिरात्रम् ।

यमः- "ऊन द्विवार्षिके बाले प्रेतत्वमनुगच्छति ।
अदन्तजाते तनये शिशौ गर्भच्युते तथा ॥
निवृत्तचूडके बाले देशान्तरमथागते ।
सपिण्डानान्तु सर्वेषामहोरात्रमशौचकम् ॥"

सप्तममासेप्यजातदन्ते मृते वर्षद्वयमप्यहोरात्रमशौचम् निवृत्तम् । देशान्तरगते लोकान्तरगते, गर्भच्युते जातमृते ।

विष्णुः- "अजातदन्ते जातेबाले प्रेते सद्य एव, नास्याग्निसंस्कारो नोदक-क्रिया, दन्तजातत्वकृतत्वात् । अहोरात्रेण कृतचूडेत्वसंस्कृते त्रिरात्रेण ।

साम्वत्सरिकस्य चूडाकरणे वर्षद्वयमध्ये त्रिरात्रेण तदनन्तरमुपनयनरूपसंस्कारो न पूर्वं षड्वर्षपर्यन्तं मृते त्रिरात्रेण शुद्धिः ।

पैठीनसिः- अकृत चूडानान्तु त्रिरात्रम् । इदञ्च दाहपक्षे विप्राणाम् ।

"अतिमोहाभिभूतैस्तु देशसाधर्म्यमादरात् ।
अशौचं ब्राह्मणानान्तु त्रिरात्रन्तत्र विद्यते ॥
राज्ञामेकादशाहन्तु वैश्यानां द्वादशाहिकम् ।
अपि विंशतिरात्रन्तु शूद्राणां भवति क्रमात् ॥"

पारस्करः- अविमर्षे प्रेतमाता पित्रोरशौचं शौचमेवेतरेषां शरीरमदग्ध्वा निखनन्त्यन्तः । सूतके चेच्चोत्थानादशौचं सूतकवत् । शौचमेव सद्यः शौचं दन्तजातपूर्वं जातमृते च सपिण्डानां शरीरं मृतस्य निखनन्ति गर्त्तेक्षिपन्ति । दशाहमध्ये चेन्म्रियते तदा माता पित्रोर्जन्मान्तरदशाहमशौचमिति । नचोत्थानादिति स्वरसान्मातुरेवाशौचम् । मातापित्रोरित्युपक्रम स्वरसेन तस्य कालमात्रपरत्वात् ।

अङ्गिराः- "विप्रे न्यूने त्रिभिर्वर्षैं मृतेशुद्धिस्तु नैशिकी ।
द्व यहात् तु क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते तथा ॥
निवृत्तचूड़के विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरेव च ॥
शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अतऊर्ध्वं मृतेशूद्रे द्वादशाहो विधीयते ॥
षड्वर्षान्तमतीतस्तु शूद्रः सम्म्रियते यदि ।
मासिकन्तु भवेच्छुद्धिरित्याङ्गिरसभाषितम् ॥"

त्रिभिर्न्यूने वर्षद्वयपर्यन्तं निवृत्ते निवृत्तचूडाकालेत्रिभिर्वर्षन्यूने तृतीयवर्षारम्भहीने द्वादशाहोऽविहाहितत्वात् षडिति ।

ब्राह्मे — अनुप नीतो विप्रस्तु राजा चैव अनुग्रहात् ।
अग्रहीतप्रतोदस्तु वैश्यः शूद्रस्तववस्त्रयुक् ॥

म्रियते यत्र तत्र स्यादशौचं त्र्यहमेव हि ।
द्विजन्मनामयङ्कालस्त्रयाणान्तु षडाब्दिकः ॥
पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतःपरम् ॥"

त्रैवर्णिकस्य तृतीयवर्षमारभ्य षड्वर्षपर्यन्तमनूढशूद्रस्य पञ्चाब्दपर्यन्तं मरणे त्र्यहमशौचम् । षड्वर्षान्तमित्यङ्गिरोवाक्येऽन्तपदं प्रथमप्राप्तपरमित्यविरोधः । पञ्चवर्षोत्तरमनूढशूद्रमरणे षोडशवर्षपर्यन्तं द्वादशाहमशौचम् ।

शङ्खः— "अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ।
मृत्युं समधिगच्छेत्तु मासं तस्यापि बान्धवाः ॥
शुद्धिसमधिगच्छन्ति नात्र कार्या विचारणा ।"

अथ क्रोशादिव्यवधानरूपपारिभाषिते च वैदेश्ये मृतस्याशौचं निरूप्यते—

यमः- "विगतन्तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
सम्वत्सरे व्यतीते तु स्पृष्टैवापो विशुद्ध्यति ॥"

जावालः— "अतीते सूतके स्वेस्वे त्रिरात्रं स्यादशौचकम् ।"
स्वेस्वे जात्युक्ते मरणाशौचे ।

देवलः- "ऊर्ध्वं सम्वत्सरार्द्धात्तु श्रूयते चेन्मृतः स्वकः ।
भवेदेकाहमेवात्र तच्च संन्यासिनान्न तु ॥"

गौतमः- श्रुत्वाचोद्ध्वं दशम्याः पक्षिणी । आगामिवर्त्तमानाहर्युक्तायान्निशि पक्षिणीत्यमरः । रात्रिश्रवणे रात्रिद्वयसहित दिनं पक्षिणीति केचित् । तन्न । अनुशासनविरहात् । सप्तमादिमासत्रये चेदम्, नवमादिमासत्रये त्वेकाहम् । अपःस्पृष्ट्वा सर्वाङ्गेन । देवलः- नाशुच्यं प्रसवस्यास्ति तृतीयादिदिनेष्वपि । मिताक्षरायान्तु--

पैठीनसिः- "पितरौ चेन्मृतौ स्यातां दूरस्थोपि च पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥
पितृपत्न्या मपेक्ष्येत मातृवर्ज्जं द्विजोत्तमः ।
सम्बत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेत् ॥"

इति वर्त्मद्वयलिखितम् । तत्तु निर्मूलत्वान्मैथिलैर्नाद्रियते ।

व्याघ्रपादः- "तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च ।
उपनीते तु विषमं तस्मिन्नेवातिकालजम् ॥"

षण्मासपर्यन्ते वयसि सर्वेषां वर्णानां तुल्यं सद्यःशौचम् अतिक्रमेणैकाहम् । द्व्यहादि वर्षद्वयपर्यन्तं त्र्यहषडहादिः तदूर्ध्वमनूढषोडशवर्षवयस्कशूद्रभिन्नस्य दशाहद्वादशाहादि विषममेवाशौचम् । जात्युक्तमरणाशौच एव स्वकालातिक्रमे त्रिरात्र पक्षिण्यादिकमशौचम् । न तु त्र्यहाशौचादेर्ज्जननाशौचस्य वाऽतिक्रमे सद्य शौचभिन्नमशौचम् सद्यश्शौचं सर्वेषां शावम् । पितुश्च पुत्रजन्मश्रवणनिमित्तं भवत्यैवेति । अथवा - कन्यायामरणे वर्षद्वयपर्यन्तं सर्ववर्णानां तुल्यं सद्यश्शौचम् , वाग्दानतदभावयोस्त्र्यहैकाहे तथैव तुल्ये । परे तूपनीते कृतपाणिग्रहणे ऊद्ध्र्वविषमं दशरात्रद्वादशरात्रादीत्यर्थः ।

मनुः- "निर्द्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य पूतो भवति मानवः ॥"

अतिक्रान्तदिनव्यापकाशौचकालं तादृशाशौचहेतुमरणं पुत्रजन्म च निर्द्दशं श्रुत्वा सचैलस्नानेन शुद्ध्यतीत्यर्थः । एवञ्च सर्वेषां शावमाशौचमित्युक्तमनूद्य पुत्रजन्मन्यशौचापगमश्रुतेऽपि स्नानमिदं विवत्ते । पारिभाषितदेशान्तरे त्वाह--

मनुः- "वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः ।
महानद्यन्तरं यच्च तद्देशान्तरमुच्यते ॥
देशनामनदीभेदान्निकटोऽपि भवेद्यदि ।
तद्देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा ॥
दशरात्रेण वा यत्र वार्त्ता न श्रूयतेऽथ वा ॥"

वृहस्पतिः—"देशान्तरं वदन्त्येके षष्ठियोजनमायतम् ।
चत्वारिंशद्वदन्त्येके त्रिंशदन्ये वदन्ति च ॥"

वा शब्दः समुच्चये नामभाषा नदी समुद्रगा । निकटस्त्रिंशद्योजनन्यूनः । दशरात्रेत्यादेः षष्ठियोजनानन्तरम् - अभिहितम् । चत्वारिंशद्देशान्यतर भेदेविंशतिद्वयभेदः ।

पंठीनसिः— देशान्तरमृतस्य सद्यश्शौचम् । देशान्तरमरणश्रवणात् । नत्वशौचस्थिति विदेशमरणेसद्यश्शौचमित्यर्थः । मरणोत्पत्तिकालीनत्वे स्थितेरत्यविशेषणीयत्वे तात्पर्यगौरवात् ।

अथ - मरणोपायविशेषादशौचापकर्षसपिण्डानामाह—

यमः—"डिम्बाशनि हतानाञ्च तथैव प्राणसत्त्रिणाम्" । कृत प्राणत्यागसङ्कल्पानां गो ब्राह्मणापदुद्धारणार्थिनां नदीपदं मरणबीजजलपरम् । यज्ञः सन्तिष्ठते अश्वमेधादिफलञ्जायते वीर ध्वनि मरणार्थमहापथगमने अनाशके मरणाय कृतानशनसङ्कल्पे मृते - दीक्षिता याज्ञवल्क्येनोक्ताः—

ऋत्विजां दीक्षितानाञ्च यज्ञे कर्मणि कुर्वताम् ।
आपद्यापि च कष्टायां सद्यश्शौचम्विधीयते ॥"

श्वापदेन व्याघ्रादिना चपेटे नद्यादिहतः । दन्तक्षतेहता दांष्ट्रिहता, सर्पविषहतास्तु न तथा । क्षतस्य विषप्रयोजकत्वेऽपि मरणाहेतुत्वात् । शिष्टानान्तत्र पूर्णाशौचाचरणाच्च ।

पराशरः - "उपसर्गमृते चैव सद्यश्शौचं विधीयते ।"

वह्निर्भावे तु व्रणमृतस्य जात्युक्तमशौचम् ।

वृहस्पतिः— "डिम्बाहवे विद्युता च राज्ञा गोविप्रपालने ।
सद्यश्शौचं हतस्याहुस्त्र्यहञ्चान्ये महर्षयः ॥"

कश्यपः अग्निजलप्रविष्टानां सङ्ग्रामदेशान्तरमृतानां त्रिरात्रेणशुद्धिः । त्रिरात्रङ्कातरतयापराङ्मुखहतस्य । अष्टमदिनश्रुतदेशान्तरमृतेश्च ।

पराशरः- "ब्राह्मणार्थे विपन्नानां वन्दिनान्तु गृहेषु च ।
आहवेषु विपन्नानामेकरात्रमशौचकम् ॥

वन्दिना विगतादिबन्धानाम् क्रोधान्मरणमात्मीयमिच्छताम् ब्राह्मणाद्यर्थो विपन्नानाम् ।

गौतमः-- गो ब्राह्मण हतानामध्यक्षं शवाध्यक्षकालव्यापकम् ।

अङ्गिराः- "व्यापादयेदथात्मानं स्वयं योऽग्न्युदकादिषु ।
विहितन्तस्य नाशौचं नाग्निर्नाप्युदकक्रिया ॥
अथावश्यप्रमादेन स्थीयेताग्न्युदकादिषु ।
तस्याशौचं विधातव्यं कार्या चाप्युदकक्रिया ॥"

प्रायश्चित्तवशेन बुद्धिपूर्वकमरणवतां नाशौचम् । ब्राह्मणाद्यर्थन्तथामृतानां सद्यश्शौचम् । क्रोधावेशेन तथा मृतानां एकाहम् । कातरतया जलाहरणादौ मृतानां त्रिरात्रम् । अनवधानवशान्मृतानां जात्युक्तमशौचमिति विवेकः ।

ब्राह्मे-- "दुश्चिकित्सैर्महारोगैष्पीडितस्तु पुमानपि ।
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनन्तथा ॥
अगाधतोयराशिञ्च भृगोः पतनमेव च ।
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात् ॥
प्रयागवटशाखाग्रे देहत्यागङ्करोति च ।
स्वयन्देवविनाशे च कालप्राप्ते महामतिः ॥
उत्तमानाप्नुयाल्लोकान्नात्मघातीभवेत्क्वचित् ।
महापातकिनः स्वर्गे दिव्यान्लोकान् समश्नुते ॥
एतेषामधिकारस्तु तपस्वी सर्वकर्मसु ।
नराणामथनारीणां सर्ववर्णेषु सर्वदा ॥
तादृशं मरणं येषाम् जीवनङ्कुत्रचिद्भवेत् ।
अशौचन्तु त्र्यहन्तेषां वज्रानलहते तथा ॥"

डिम्वाहवादिना सद्योमृतानां सद्यश्शौचम् । तदहः किञ्चिद्विलम्ब्य मृत-

स्यैकाहम् । दिनान्तरे मृतस्य तयोर्थं प्रयागवटस्य मृतस्यत्रिरात्रमिति मन्तव्यम् ।

तथा - देशान्तरमृते तस्मिन्साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संश्रद्धा प्रवि- ज्जातवेदसम् ॥
ऋग्वेदवादान्न साध्वी स्त्री भवेदात्मघातिनी ।
त्र्यहाशौचेति वृत्तो तु श्राद्धम्प्राप्नोति शास्त्रवत् ॥

विप्रा न गन्तुमर्हतीति निषेधात्तद्भिन्नस्त्रीणामेवानुगमनेऽधिकार इति रत्नाकरः। साध्वीति प्रागभिधानात् । असाध्वी विप्रा नानुगच्छेदितित्वाचारानुसारिणः ।

## अथ सपिण्डाशौचमाह

मनुः-- "त्रिरात्रमाहुराशौचमाचार्य्ये संस्थिते सति ।
तस्य पुत्रे च पत्न्याञ्च दिवारात्रमिति स्थितिः ॥
श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत् ।
मातुले पक्षिणीरात्रिः शिष्यर्त्विग्बान्धवेषु च ॥
प्रेते राजनि सज्योतिर्यस्यस्याद्विषये स्थितिः ।
अश्रोत्रियेत्वहः कृत्स्नमनूचाने तथा गुरौ ॥"

आश्वलायनः- "गुरावसपिण्डे त्रिरात्रम्" । गुरुवदाचार्यं उपनीय सम्पूर्णवेदाध्यापकः । मनूक्तन्तु - गुरुरसम्पूर्णवेदाध्यापकः अनुपनीय साङ्गवेदाध्यापकश्च त्रिरात्रमिति निवृत्ताध्ययनस्य । अधीयानमधिकृत्य--

गौतमः- त्र्यहमाचार्ये तत्पुत्र स्त्री याज्यशिष्येषुचैवम् । असवर्ण स्त्रीपुत्ररम् मनुवचनमित्यन्ये । उपसम्पन्ने - स्वगृहमृते । गृहे यस्यमृतः कश्चिदसपिण्डः कथञ्चन तस्याप्यशौचं विज्ञेयं त्रिरात्रमिति निश्चय इत्यङ्गिरोवचनात् । एकाहानुवृत्तौ--

विष्णुः- असपिण्डे स्ववेश्मनि मृते । अश्रोत्रियपरमिदम् । श्रोत्रियपरञ्च

परमिदम् । सवर्णायान्त्वेकाहमिति मिश्राः । हीनवर्णायां परपूर्वभार्यायां प्रसवजन्यं त्र्यहम् । दाहादि सम्बलनकृतमशौचमाह-

गौतमः- प्रेतोपस्पर्शने दशरात्रमेवाशौचमभिसन्धाय चेदुक्तं वैश्यशूद्रयोः। आर्गवीर्वा पूर्वयोश्च त्र्यहम् । आचार्यतत्पुत्रस्त्रियाश्चैवम् । अभिसन्धाय धनलाभं पूर्वयोर्विप्रक्षत्रयोरित्यत्राप्यन्वेति। दशरात्र क्षत्रस्य द्वयाधिकम् । एवकारो द्वितीयदशकव्यवच्छेदार्थः ।

उक्तम् • जात्युक्तम् । आर्णवीर तु सः कारात्रिः। पूर्वयोर्वैश्यशूद्रयोः चकारो ब्रह्मक्षत्र समुच्चयपरः। इदञ्च त्र्यहम् । वेत्यत्राप्यन्वेति। स्पष्टञ्चैतत्—

कौर्मे- "दशाहेन शवस्पर्शे असपिण्डस्तु शुद्ध्यति ।
यदि निर्द्दहति प्रेत प्रलोभाक्रान्तमानसः ॥
दशाहेन द्विजः शुद्ध्येद्द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रोमासेन शुद्ध्यति ॥
षड्रात्रेणाथ वा सर्वे त्रिरात्रेणाथ वा पुनः ।
निर्गुणे सगुणोत्कृष्टे गुणानां क्रमणे त्रयम् ॥"

याज्य:- सदायजमानः। शिष्याचार्य गृहमृतः त्र्यहमित्यन्वेति।

मनु.- "असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषान्तु त्रिरात्रेण च शुद्ध्यति ।
अनदन्ननमह्नैव नचेत्तस्मिन्गृहे वसेत् ॥
अवरश्चेद्वरं वर्णमवरञ्च वरोयदि ।
अशौचे संस्पृशेत्स्नेहात्तस्य शौचेन शुद्ध्यति ॥"

ब्राह्मे- "योऽसवर्णन्तु शून्येन नीत्याचैव दहेन्नरः ।
अशौचन्तु भवेत्तस्य प्रेतजातिसमं सदा ॥

स जाति सम पिण्डास्तु दग्ध्यन्तद्गृहभोजिनः ।
अजात्युक्तमशौचन्तु चरन्ति जड़बुद्धयः ॥
अन्यजातिं मृतन्दग्ध्वा तदन्नम्भुञ्जते तु ये ।
कुत्सितास्ते नराः प्रोक्तास्तस्याशौचस्य भागिनः ॥"

**पैठीनसिः**- असम्बन्धि द्विजान् वहित्वा दहित्वा च सद्यः शौचम् । सम्बन्धे त्रिरात्रम् ।

**पराशरः**- "अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमानुपूर्व्याऽश्नुवन्तिते ॥
प्रेतसंस्पर्शसंस्कारै र्ब्राह्मणो नैव दुष्यति ।
वोढा चाग्निप्रदाता च सद्यः स्नात्वा विशुद्ध्यति ॥"

अङ्गिरा- "यः कश्चिन्निर्हरेत्प्रेतमसपिण्डः कथञ्चन ।
स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्ध्यति ॥
प्रेतान्नमसपिण्डस्तु यावदश्नात्यकामतः ।
तावन्त्यहानि अशौचं स्यात्सपिण्डानां कथञ्चन ॥
यस्तु भुङ्क्ते शवाशौचे वर्णः सोप्यशुचिर्भवेत् ।
अन्ते शुद्धिस्तु तस्यैव तस्याप्युक्ता मपीषिणः ॥
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रन्तु पयः पिवेत् ।
अन्तर्दशाहे भक्त्वान्नं मृतके सूतकेऽथ वा ॥
असंस्कृते भवेत्तावद्यावद्व्रतं समाचरेत् ।
ब्रह्मक्षत्रविशाञ्चैव न दोषोस्त्यग्निहोत्रिणाम् ॥
सूतके शाव आशौचे ह्यस्थि सञ्चयनात्परम् ।
अन्नमत्र प्रवृत्तानामाषमन्न समाहितम् ॥"

कौर्मे- असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
अशित्वा च महोषित्वा द्वादशाहेन शुद्ध्यति ॥
यस्तैः सहासनङ्कुर्याच्छवमादीनि चैव हि ।
बान्धवो हि परोवाऽपि स दशाहेन शुद्ध्यति ॥

यावत्तदन्नमश्नाति दुःखी भवति स नरः ।
तावन्त्यहान्यशौचं स्यात्प्रायश्चित्तं भवेत्ततः ॥
यस्तेषामन्नमश्नाति सकृदेवापि कामतः ।
तदशौचे निवृत्तेऽपि स्नानङ्कृत्वा विशुद्ध्यति ॥
दाहयित्वा तु शून्येन गुरुं प्रेतं भवेत्ततः ।
अशौचं दशरात्रन्तु शिष्यस्यैव विनिश्चयः ॥
आचार्यम्वाप्युपाध्यायं गुरुञ्च पितरञ्च वा ।
मातरं श्वशुरम्वाऽपि प्रेतान्नं ननु भक्षयेत् ॥
अन्यथा भोजनङ्कुर्यान्नच तैस्सह संवसेत् ।
एकाहमशुचिर्भूत्वा द्वितीयेहनि शुद्ध्यति ॥"

ब्राह्मे-- ब्राह्मणम्वाऽतिथिम्वाऽपि मित्रम्वाप्यन्यमेव वा ।
मोहाद्दग्ध्वाततः स्नातः स्पृष्ट्वाग्निं प्राशयेद्घृतम् ॥
उपवासरतः पश्चात्त्रिरात्रेण विशुद्ध्यति ।
सर्वेषां स्यादहोरात्रं शवानुगमनादपि ॥"

वृहस्पतिः—"यस्तैः सहासपिण्डोऽपि कुर्याच्च शयनानि च ।
बान्धवो वाऽवरोवाऽपि स दशाहेन शुद्ध्यति ॥"

द्विजं • विप्रं निर्हृत्य दग्ध्वा वा बन्धुवत्स्नेहेन । निर्हारान्नभोजनयोस्त्रिरात्रम्, निर्हारङ्कृत्वातद्गृहाशनवासाभावे त्वेकरात्रम् । निर्हारतद्गृहवासयोः करणे त्रिरात्रम् । मातृबान्धवादीन् निर्हृत्य तद्गृहेभुक्तोषित्वा वा त्रिरात्रमेव । अद्यर्थक वहुवचनेन चकारेण वा पितृबान्धवात्मवान्धवयोरुपग्रहः । अवरो - हीनः । वरः श्रेष्ठः । अशौचे शवदशायां तस्य शौचेन • शवजातिविहिताशौचापगमेन । सम्बन्धे - स्नेहरूपे । ब्राह्मणम्वान्यूनजातिम् । प्रतं न्यूनजातिम् , कायञ्च न धर्मबुद्ध्याऽनाथत्वेन । तावन्त्यहानि अन्नभोजनाहोरात्राणिव्याप्य सपिण्डानां तुल्यमशौचम् । भुङ्क्ते - कामतः । अन्ते - अशौचान्ते । तस्येव - सपिण्डस्येव । तस्यान्नभोजिन एकवारमपि । तत्रैवाधिकं शुद्धिहेतुमाह - भुक्त्वेति । पक्वान्नम् - वह्निसिद्धान्नम् । पयो - गोदुग्धम् । नतु जलम् । ब्राह्मे-- घृतप्राशनविधिस्वरसविरहात् प्रेतान्नमिति शवाशौच इति च न जननाशौचव्यवच्छेदपरम् । इतिदर्शयति - सूतकइति ।

असंस्पृश्यो - वैधकर्मसम्बन्धहीनः। तद्भूतं पयः पानम् भुक्त्वेति पक्वान्नमित्यनुषज्यते। प्रयश्चित्त स्नानं वक्ष्यमाणम्। अश्नाति दुर्भिक्षम्विा। ततो गुरोः प्रेतात्। अन्यथातद्गृहानुव्यतिरेकेण शवानुगमनादनाथभिन्नस्थले। प्रकुर्यादित्युपसर्गो - बुद्धिपूर्वतायोतकः।

पारस्करः— "अस्थिसञ्चयनादर्वाग्यदि विप्रोऽश्रुपातयेत्।
मृते शूद्रे गृहङ्गत्वा त्रिरात्रेण विशुद्धयति॥"

ब्राह्मे — "तदा स्नातः सचैलस्तु त्रिरात्रेणविशुद्धयति।
अनस्थिसञ्चयाद्विप्रो रौतिचेत् क्षत्रवैश्ययोः॥
ततः स्नातः सचैलस्तु द्वितीयेऽहनि शुद्धयति।

कौर्मे — "अस्थिसञ्चयनादर्वागेकाहं क्षत्रवैश्ययोः।
अन्यथाचैव सज्योति ब्राह्मणे स्नानमेव तु॥"

त्रिरात्रम् पूर्वंसचैल स्नानाचमनेऽस्थिसञ्चयपूर्वं विप्रस्य शूद्रगृहेऽश्रुपाते ब्राह्मणस्य मृतस्यगृहेऽश्रुपाते स्नानाचमने, मृत क्षत्रियवैश्यगृहेऽश्रुपातेत्वेकाहम्। मृतपूर्वं स्नानाचमनं कृते अस्थिसंचये शूद्रस्य गृहे रोदने कृते ब्राह्मणानामहोरात्रे स्नानाचमने। वैश्यक्षत्रास्थिसञ्चयोत्तरं दिवारोदने दिनरोदने वा त्रिरात्रम्। स्नानमाचमने च पूर्वं ब्राह्मणास्थिसञ्चयोत्तररोदने स्नानमेवकारेणाचमनस्य शुद्धिहेतुत्वव्यवच्छेदात्। स्नाननिमित्तकन्त्वाचमनं व्यवच्छिद्यते —

ब्राह्मे — रोदनेऽसपिण्डे विप्रवदेव क्षत्रादित्रयस्याशौचम्। क्षत्रवैश्ययोर्मरणोत्तरयोरेव रोदनेप्येवम्।

पारस्करः — "स्वजातेः दिवसेनैव द्व्यहात् क्षत्रियवैश्ययोः।"

स्वपदम् -शूद्रपरम्। मृते शूद्र इत्युपक्रमात्। षष्ठ्यो विषयतायाम्। तेनैतदर्थं रोदने शूद्रस्येयं शुद्धिः।

ब्राह्मे — "सचैलं स्नानमन्येषामकृतेप्यस्थिसञ्चये।
कृते तु केवलं स्नानं क्षत्र विट् शूद्रजन्मनाम्॥

## अथाशौचापवादमाह

मनुः—"आदिष्टी नोदकङ् कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकङ् कृत्वा त्रिरात्रमशुचि भवेत् ॥"

याज्ञवल्क्यः—न ब्रह्मचारिणः कुर्युरुदकं पतिता न च ।
पाखण्ड्यमाश्रिता स्तेना न व्रात्या न विकर्मिणः ॥

पाखण्डा - वेदनिन्दकः । विकर्मिणः - स्वधर्मत्यागिनः ।

"गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ।"

कात्यायनः—"न त्यजेत्सूतके कर्म्म ब्रह्मचारी तु कुत्रचित् ।
न दीक्षणात्परं यज्ञे सकृच्छ्रादितपश्चरन् ॥
पितर्य्यपि मृते नैषां दोषोभवति कश्चन ।
अशौचङ्कर्मणोऽन्तेस्यात् त्र्यहं वा ब्रह्मचारिणाम् ॥"

न त्यजेदिति । दाहकर्त्ता त्वेकाहं त्यजेदित्यभिहितम् । कर्मणो यज्ञतपोरूपस्य त्र्यहम्वेति वा शब्दोऽवधारणे समावर्त्तनकर्मणोन्त इत्यनुषङ्गः ।

ब्राह्मे—"गृहीतमधुपर्कस्य ? वेदनिम्नाच्च ऋत्विजः ।
पश्चादशौचे पतिते न भवेदिति निश्चयः ॥
तद्वद्गृहीत दीक्षस्य त्रैविद्यस्य महामते ।
स्नानन्त्वव भथे यावत्तावत्तस्य न विद्यते ॥
निवृत्तो कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ।
गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ॥
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायान्निरतस्य च ॥
गेहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ।
नैष्ठिकस्याथवान्यस्य भिक्षार्थं प्रस्थितस्य च ॥
वानप्रस्थस्य चान्यस्य साधिकारस्य सर्वदा ।
प्रतिग्रहाधिकाराच्च निवृत्तस्य न विद्यते ॥
गोमलादौ तु वैश्यस्य रक्षाकालात्ययादपि ।
अपिदातृग्रहीत्रोश्च सूतके मृतके तथा ॥

अविज्ञाते न दोषः स्यात् श्राद्धादिषु कथञ्चन।
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्ताद्दिकंक्रमात् ॥
भोजनार्द्धे तु सम्भुक्ते विप्रैर्ह्यातु विपद्यते।
यदा कश्चित्तदोच्छिष्टशेषन्त्यक्त्वा समाहितः ॥
आचक्ष्य परकीयेन जलेन शुचयो द्विजाः।"

इतरस्य श्राद्धकर्त्तुः स्वाध्यायाद्वेदकथनात्। अन्यस्योपकुर्वाणस्य। अन्यस्यमते - स्वाधिकारस्य वेदविहिताशौच्यत्वभोजनस्य अधिकारं प्राप्य निवृत्तमविद्यतेऽशौच्यन्न भोजनेदोषः। रक्षाव्याध्यादिनिराकरणन्तस्य कालात्ययप्रसङ्गात्। अपिकारेण क्षत्रसमुच्चयः। तत्र - रक्षा चोरव्याघ्र प्रति भूपादिभ्यो बाध्योविज्ञातेऽस्याशौचे दात्रा आदिपदादशौचपापपरिग्रहः द्विजाः श्राद्धविप्राः। अयञ्चाशौचाभावस्तु तत्कर्मण्येव नतु सन्ध्यापञ्चयज्ञादौ। तदाह—

विष्णुः—अशौचं न राज्ञाम् राजकर्मणि व व्रतिनाम् न मन्त्रिणाम् मन्त्रे, न कारूणाम्, न-राज्ञामाज्ञाकारिणां तदिच्छया। न प्रतिष्ठाविवाहयोः।

ब्राह्मे—"दासा दास्यश्च यत्कर्मकुर्वन्त्यपि च शीलया।
तदन्यो न क्षमः कर्त्तुं तेन ते शुचयो मताः ॥"

यमः-"स्वस्थवृत्तावयं धर्म आपदि त्वन्यथा स्मृतः।
दैवे भये समुत्पन्ने प्रधानाङ्गविनाशिते ॥
पूर्वसङ्कल्पिते चार्थे तस्मिन्नाशौचमिष्यते।"

राज्ञाङ्कर्मणि तदिच्छया नाशौचम्। नारम्भानन्तरं प्रतिष्ठायां विवाहे च। आपदि कर्मणोऽन्यथानुपपत्तौ। अन्यथाऽशौचविरहः। दैवे उत्पातादौ तच्छान्ति होमादिना च। प्रधानाङ्गे सेनापतिराजादौ नाशिते सेनापत्याद्यन्तराभिषेके नाशौचमिति।

## अथ जननाशौचम्

गर्भपतन -तज्जात-बालादिमरणाशौचप्रसङ्गे हीनवर्णयोषिन्मैथुन - सूति-

कागमनजसूतकप्रसङ्गेन चाभिधेयम्। तच्च सपिण्डसकुल्ययो र्मातापित्रोश्च शावस्नान प्रकरणे निरूपितम्। इदानीन्तु जननस्य मरणस्य जननमरणयोश्च यौगपद्ये व्यवस्थाऽभिधीयते।

## अशौचसङ्करः

देवलः - "अघानां यौगपद्ये तु ज्ञेया शुद्धि र्गरीयसी।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्॥"

आघानां मरणजननोत्तरदशा त्र्यहादीनां जात्युक्ताशौचेनान्यस्याशौचस्यापगमः, मरणाशौचेन जननाशौचापगमः। प्रसवनिमित्तकस्य तु दशरात्रविंशतिरात्र त्रिंशद्रात्र रूपस्य भस्मान्तसूतकस्य च पुत्रजन्मसूतिकामैथुनहेतुकास्पृश्यत्वस्य च रजोऽशौचस्यैव तेनापवादः। आनामित्यभिधानादज्ञातयोर्जनन मरणयोर्नेयं व्यवस्था वक्ष्यमाण द्व्यह त्र्यह रूपाद्ये गरीयस्त्वं नास्ति। एकासजातीयनिमित्तज्ञाने--

बौधायनः -जननमरणयोस्सन्निपाते समानेदशरात्रैश्च। अथ यदि दशरात्राः सन्निपातयः आद्यम् दशरात्रमानवमादिवसात्। अथेत्यादि बहूनां सम्पूर्णाशौचानामुपान्त्यदिनपर्यन्तेन क्रमिकज्ञाने। तादृशयोर्द्वयोः क्रमिकज्ञाने।

ब्राह्मे--"आद्यं भागद्वयं यावत्सूतकस्य तु सूतके।
द्वितीये पतिते चाद्यात् सूतकाच्छुद्धि रिष्यते॥
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुद्धिरिष्यते।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे॥"

अत्र प्रकाशव्याख्याने मीमांसकम्मन्या वाचस्पतिमिश्रादयोऽस्वरसमाविष्कुर्वन्ति-

दशरात्रा इति बहुत्वमुद्देश्यगतत्वादविवक्षितमतो ब्रह्मपुराणैकवाक्यतयाऽद्यभागपातपरम बौधायनवाक्यमिति। तदयुक्तम्। नवमत्व द्वितीयत्वयोरविवक्षण वीजाभावात्। वाक्यभेद गौरवेणान्यत्रोद्देश्यसंख्याविवक्षणेऽप्यगत्या गौरवस्यालोचनतया बहुत्वविवक्षणाच्च। अन्यथा - चतुर्थयोः

षष्ठाष्टमयो र्वा दिनयोः पूर्णाशौचद्वयपाते षुष्टादिदिनत्रये त्रयपातेत्राषयद-स्थानुपपत्तेः। पश्चिमेन समापये दित्यस्य द्वितीयात् सूतकानामित्यस्य वा प्रसवः। द्वितीयत्वं पश्चिमत्वस्य। तदाह--

देवलः--परतः परतः शुद्धिरघवृद्धौ विधीयते ।
स्याच्चेत्पञ्चतमादह्नः पूर्वेणाप्यनुशिष्यते ॥
द्वितीयत्वस्योपलक्षकमिति विनिगन्तुमशक्यत्वात् ।

किञ्च-षष्ठैकादशयो र्दिनयोर्द्वयपाते तेन शुद्धिरित्यविनिगमः। अथ द्वित्रै रेकमेवाशौचम्। तथाच - त्रयाणांशङ्कर एवमितिचेत्: नैवम् - जन्मादेरेवा-नन्तरदशा वा वचनार्थो यतः अन्यथा - बहुत्वासङ्गतेः। अतएव द्वयोः सङ्कर उपपद्यते। अशौचन्तु तत्रैकमेव। तस्माद्द् बलवचनोक्तार्थानुसारिणी व्यवस्था स्वस्था।

विष्णुगौतमौ--"रात्रिशेषे दिनद्वयेन। प्रभाते दिनत्रयेण।"

एकाहे बह्वशौचे चरमदिने प्राचीप्रकाशात् प्राक् पूर्णाशौचे प्रभाते तद्दि-नानन्तरं दिनद्वयेन प्राचीप्रकाशानन्तरमुदयात्प्राक् तस्मिन्ज्ञातेऽनन्तरदिनत्रयेण शुद्धिः। रात्रिपदस्य बौधायनवचने दिवसपदस्यस्वरसान्नवं रात्रौ श्रवणे द्व्यहम्, दशमाहोरात्रे श्रवणे त्र्यहेन शुद्धिरिति भ्रमः। प्रभातपदस्याहोरात्रा-बोधकत्वात्। रात्रिपदे त्वहोरात्रे बहुशः प्रवृत्तेः। इदन्तु मन्तव्यम् - प्रथम-जातमरणस्य ज्ञाते द्वितीयप्रथम भागद्वय चरम भागद्वययोः श्रवणे द्वितीय प्रथम-मरणोत्तर दशाहाभ्यां शुद्धिः। सूतके द्वितीय इत्यशौचाभिधानादित्यनभिज्ञा वचनाचारयोरनादरः कार्यः। सूतकपदस्य जननार्थकत्वात् मृतकपदस्य मर-णार्थकत्वादशौचकाल मध्येद्वयोर्ज्जनने सत्येव सङ्कर इत्यन्यदेतत्। सम्वदति चात्र शिष्टाचारः। पूर्णाशौचभिन्ने--

यमः- "अघवृद्धिपदाशौचं पश्चिमेन समापयेत्।"

सङ्करस्थलेऽपरत्वार्थकप्रथमाशौचज्ञातमरणान्तराभ्यामपरत्व द्वयेन वा परत्वान्तरं जन्यत इति।

## अथाशौचिनियमाः

मनुः- "उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ॥"

जाबालः- "सन्ध्यां पञ्चमहायज्ञान्नैत्यिकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनःक्रिया ॥
जन्महानौ वितानस्य कर्मत्यागो न विद्यते ।
शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ॥"

यमः- "सूतके तु कुलस्यान्नमदोषमनुरब्रवीत् ।
एकादशेऽह्नि कुर्वीत दानमध्ययनन्तपः ॥
एतद्धर्मोऽपरोवाऽथ मावसथ्ये तदुच्यते ।"

ब्राह्मे- देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
अयान्ति तस्मात्तदहः पुण्यं यद्वच्च सर्वदा ॥
तत्र दद्यात्सुवर्णञ्च भूमिं गां तुरगन्तथा ।
छत्रं छागञ्च माल्यञ्च शयनञ्चासनङ्गृहम् ॥
जातश्राद्धे तु न देयात्पक्वान्नं ब्राह्मणेषु च ।
लवण मधु मांसञ्च पुष्पमूलफलानि च ॥
काष्ठं लोष्ठं तथा पर्णं दधि क्षीरं घृतन्तथा ।
औषधं तैलमजिनं शुष्कमन्नञ्च नित्यशः ॥
अशौचिनां गृहाद्ग्राह्यं स्वयं पत्यञ्च न जलम् ।
न बर्द्धयेदघाहानि प्रत्यूहे नाग्निषु क्रिया ।
नच तत्कर्म कुर्वाणः स नान्यो पशुभिर्भवेत् ।

हारीतः- जाते कुमारे पितृणामामोदात्पुण्यन्तदहस्तस्मात्तिलपूर्णपात्राणि सहिरण्यानि ब्राह्मणानामाहूय पितृभ्यः स्वधाङ्कुर्यात् । प्रजापतयेप्राङ्नारी छेदात्संस्कारपुण्यार्थान्कुर्वन्ति । नाड़ीछिन्ने अशौचं शङ्खलिखितौ- कुमारप्रसवे नाड्यामच्छिन्नयाम् गुड़, तिलतैल हिरण्य, वस्त्रप्रावरण, गो, धान्य, प्रतिग्रहेषु न दोषः ।

"दोषस्तदहरित्येके गुर्वर्थङ्कर्म कुर्वतः ।"

छन्दोगपरिशिष्टे- "सूतकेषु तैलत्यागः सन्ध्यादीनां विशेषतः ।
होमः श्रौत्रे तु कर्त्तव्य शुष्कान्नेनाथवा फलैः ॥
अकृतं हारयेत्तस्मात्तदभावे कृताकृतम् ।
कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतम्प्रोक्तमिति हव्यं त्रिधाबुधैः ॥"

उभयत्र जननेमरणे च कुलस्याशौचिनोऽन्तशौचिनः ।

यक्ष।— सद्यश्शौचादिकं गुणविशेषाद्ययुक्तं तन्मध्ये सिद्धान्नदानमित्यादि नाड़ीछेदानन्तरं पुत्रजन्मदिनषष्ठाहभिन्नपरम् नेत्यादिगुणवान्न निर्गुणवन्नाधिक-दिनव्यापकमशौचम् न मन्येत, नाग्निहोत्रं त्यजेत् । तत्सपिण्डगुणवान्नाशुचि-र्बहुकालं भवेदित्यर्थः । दशाहान्ते अशौचापगमे नेत्यबैधस्नानम् । स्मृतिकर्म-श्राद्धादि । हानौ मरणे वितानस्य श्रौताग्नेः शाणाग्नौस्मार्त्ताग्नेः । केवलोऽ-ग्निसिद्ध व्यतिरेकेण सपिण्डादिद्वारा । कुलस्य तु तुल्याशौचवतः । एकादशे-अशौचान्ते । त्रयेति - अग्नित्रयवताहोमत्यागरूपदोषपरिहाराय सिद्धान्नेनाशौच-मध्ये अन्यद्वारा, तदन्ते तु स्वयं होतव्यम् । द्विजन्मनाम् - पुत्रात्मक द्वितीय-देहजन्मवताम् आत्मा वै जायते पुत्र इति श्रुतेः ।

जातश्राद्धे देयमन्नं मध्वादिकं वदन्नेव दानान्तरकर्मण्याह - सुवर्णञ्चे-त्यादि जातश्राद्धे पिण्ड आवाहनाग्नौ करणाद्यवनेजनानि नेति सत्त्रियज्ञस्वामि-कर्मकराः । काष्ठम् - चन्दनादि । लोष्टम् - सैन्धवादि । औषधी - कद-लादिः । पण्यम् - क्रय्यम् । मूलजम् - आकरजम् । स्वधाम् - त्यागम् । संस्कारो - जातकर्म, पुण्यार्थः श्राद्धदानादि प्रावरणम् । शूणिकाकम्बलादिः । नाडीछेदानन्तरमपि गुवर्थम्प्रतिगृह्णतस्तस्मिन्नहन्यदोषः ।

श्रोत्रे त्विति - त्र्यहाशौचमध्ये स्वयंफलान्नादिना । सपिण्डान्यद्वारा तु सिद्धान्नेनैव । स्मार्त्ताग्नौत्वामान्नमेवाशौचे परद्वारा होतव्यम् । विप्रादि-भ्यो देयञ्च - श्रौताग्निमता सतृण गवासनं प्रतिग्राह्यम् । तण्डुलादित्यादि-

पदेन मुद्गकलायादेः । सक्त्वादीत्यादिपदेन - लाजमोदकादः परिग्रहः । अशौचिनोऽन्नभोजने - सहाशन - रोदनादौ च कृतेऽग्न्यादिगुणवानपि सपिण्डः पूर्णाशौचीत्युक्तम् प्राक् ।

मरीचिः - "तैलौषध्यजिने चैव पक्वापक्वे स्वयं ग्रहे ।
पत्नीषु चैव सर्वासु नाशौचं मृतसूतके ॥"

पक्वम् - मोदकादिः । अपक्वम् - तण्डुलादिः । स्वयङ्गृह्यमाणत्वञ्चात्रैवान्वेति । सन्निधानात् । रत्नाकरोप्येवम् ।

शूद्रवद्वर्णसङ्करा इति ब्राह्मोक्ते विशेषमाह—

दक्षः – "वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः ।
दशाह षट् त्र्यहैकाहाः प्रसवे सूतकम्भवेत् ॥"

ब्राह्मणपरिणेतृपरम् ।

शङ्खः— पित्रदत्तादशायां रजस्वलायाः प्रसवमरणयोर्यावज्जीवं परिणेतुरशौचम् । "अनूढासु हीनवर्णासु प्रसूतासु मृतासु च ।"

प्रसवइति—मृतकस्याप्युपलक्षकम् ।

ब्राह्मणस्य क्षत्रिय विट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः क्षत्रियस्य विट्शूद्रेषु षड्रात्रत्रिरात्राभ्याम् वैश्यस्य शूद्रेषु षड्रात्रेण । व्युत्क्रमे परिणयेत्वाह-

"शुद्ध्येद्विप्रो दशाहेन जन्महानौ स्वयोनिषु ।
सप्त पञ्च त्रिरात्रैस्तु क्षत्रविट् शूद्र योनिषु ॥"

हीन विप्रपरमिति दर्पणः ।

कौर्मे-- "क्षत्रविट्शूद्रदायादा ये स्युः विप्रस्य बान्धवाः ।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥
राजन्यवैश्यावप्येवम् हीनवर्णासु योनिषु ।
स्वमेवाशौचंकुर्यातां विशुद्ध्यर्थं न संशयः ॥

सर्वे भूतसवर्णानां शौचङ्कुर्यु रनिन्दिताः ।
तद्वर्णं विदृष्टेन स्वस्वशौच स्वयोनिषु ॥"

ब्राह्मे-- "बान्धवेषु च विप्रस्य क्षत्रविट्शूद्रयोनिषु ।
मृतेषु चाथ जातेषु दशाहाच्छुद्धिरिष्यते ॥
देशधर्मप्रमाणत्वादिदमाह प्रजापतिः ।"

देशविशेषपरे - वचने । स्वमेवेत्य त्कृष्टपरम् । देशविशेषपरम्वा ।

विष्णुः-- हीनवर्णानामधिकवर्णेषु तदशौचव्यपगमेन शुद्धिः । सपिण्डन्तु तेषां त्रिपुरुषमित्युक्तम् ।

जावालः- "नानाजातिषु पारक्ये पैतृकं जीवितः पितुः ।
अतीतेमातृकं विद्यात्पारक्यमुभयोरपि ॥"

नानाजातिषु भ्रातृषु अतीते पितरि मातृकंमातृजात्युक्तमशौचम् । उभयोर्मृतयोर्ज्जात मृतभ्रातृजात्युक्तमशौचमित्यर्थः । विष्णुवचनन्तु - मातापितृ जीवनपरमिति न विरोधः । विष्णुवचनन्तूत्कृष्टपरम् ।

विष्णुः-- पत्नीनां दासानामानुलोम्येन स्वामितुल्यमशौचम् मृते स्वामिन्यात्मीयम् । हीनवर्णानां पत्नीनां तत्पुत्राणाञ्च तस्मिन् जीवतिभार्यात्युक्तमित्यर्थः । विनोदपरिणीतानान्तु सर्वत्र स्वजात्युक्तमित्युक्तम् । दासपदम् -हीन वर्णापुत्रार्थकम् भृत्यपरञ्च ।

आपस्तम्बः- "क्षत्र विट्शूद्र जातीनां येऽव्यस्ता मृतसूतके ।
तेषां वै पैतृकं शौचं विभक्तानान्तु मातृकम् ॥"

अव्यस्ता - अविभक्ताः ।

वृहस्पतिः—"दासान्तेवासि भृतक शिष्याश्चैकत्र वासिनः ।
स्वामितुल्येन शौचेन शुद्ध्यन्ति मृतसूतके ॥"

एकत्रग्रामे विष्णुवचनमप्येतत्परमेव ।

"स्वं शिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया ।
आचार्यस्य बसेदन्तेकालङ्कृत्वा सुनिश्चितम् ॥"

इति नारदोक्तेः।

अथाशौचक्रिया - पूर्वक्रिया, तदन्तक्रिया प्रेतषोडशीमध्यमक्रिया, तदन्तक्रिया चोत्तरक्रिया पार्वणश्राद्धादीनि, निरूपणीया। तत्रादौ निर्हरणादिर्निरुप्यते।

## अथ पूर्वक्रिया

मनुः- "दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरयोगेन यथायोगं द्विजन्मनः॥"

अमङ्गल्यत्वेन शूद्रवैश्य क्षत्र विप्र क्रमेण दक्षिणादि चतुष्टयाभिधानम्। विष्णुः न मृतं द्विजं शूद्रमाहरेयुर्न्न शूद्रं द्विजा निर्हरेयु, मातरं पितरं पुत्रा निर्हरेयुर्न्न द्विजं पितरं मातरमपि शूद्राः ब्राह्मणमनाथं ये ब्राह्मणा निर्हरन्ति ते स्वर्गभाजः। मातरम् - सपत्नीमातरम्। द्विजा - ब्राह्मणा अनुपनीता अपि। शूद्रा इति जात्युपक्रमस्वरसात्।

यमः- "यस्यानयति शूद्रोग्निं तृणकाष्ठहवींषि च।
मन्यते ह्येष धर्मोस्ति स च धर्मेणलिप्यते॥"

यस्य प्रेतद्विजस्य कृते धर्मबुद्ध्याऽग्न्यादिकंनयति स द्विजः प्रेतः शूद्रश्चाग्न्यानेतालिप्यते।

वाराहे- कण्ठस्थानगतो जीवो भीतो विभ्रान्तमानसः।
ज्ञात्वा तु विह्वलस्तत्र शीघ्रं निस्सार्यते गृहात्॥
कुशान्तरणशायी च दिशस्सर्वासु पश्यति।
दापयेत्स्नेहभावेन भूमिं साक्षाद्द्विजातिषु॥
सुवर्णम्वा हिरण्यम्वा यथोत्पन्नन्तु माधवि।
तत्र लोकहितार्थाय गोप्रदानं विशिष्यते॥
तथैव दीपदानेन शीघ्रं मुच्येत किल्विषात्।
पश्चाच्छ्रुतिपथं दिव्यमुच्चैः कर्णे च श्रावयेत्॥

दृष्ट्वा सुविह्वलं प्रेतं सममार्गानुसारिणम् ।
प्रमाथकालेनैतत्तु मन्त्रेण विधिपूर्वकम् ॥
मद्भक्तेनैव दातव्य सर्वसंसारमोचनम् ।
मधुपर्कन्ततो गृह्य इमम्मन्त्रमुदीरयेत् ॥

"ओं सङ्ग समागच्छ ममैवदेहे ।
मधु पर्क - संसारमोक्षणम् ।
शरीर शव आगच्छतां निहन्मि शरीरशोधनम् ।
गृह्ण लोकनाथ प्रोक्तमिदं मधुपर्कम् "॥

एतेन मन्त्रेण - मधुपर्कोत्तमन्दद्यात् ।

पुरुषो मृत्युकाले तन्दत्वा संसारमोक्षणम् ।
एवं विनिर्गतैः प्राणैः संसारं स न गच्छति ॥
सज्यावनस्पतिन्दत्वा गन्धानि विविधानि च ।
घृतं तैलसमायुक्तं दत्वा वै देहशोधनम् ॥
तेनाऽभ्युक्ष्य गुरुं शाप्य नयेत्तं पैतरं वनम् ।
दक्षिणाशिरसङ्कृत्वा सचैलन्तु शवन्तथा ॥
तीर्थस्यावाहनङ्कृत्वा स्नपनन्तत्र कारयेत् ॥

"गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः ।
कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम् ॥
कौशिकीञ्चन्द्रभागाञ्च सर्वपाप प्रणाशिनीम् ।
भद्रावकाशां सरयूं गण्डकीन्तमसान्तथा ॥
धैनवञ्च वराहञ्च तीर्थपिण्डारकन्तथा ।
पृथिव्यां यानि तीर्थानि चतुरः सागरांस्तथा ॥"
ध्यात्वा तु मनसा सर्वे कृतस्नानं गतायुषम् ॥
देवाश्चाग्निमुखास्सर्वे गृहीत्वा तु हुताशनम् ।
गृहीत्वा पाणिना चैव मन्त्रमेतमुदीरयेत् ॥

"कृत्वा सुदुष्करङ्कर्म जानता वाऽप्यजानता ।
मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम् ॥
धर्माधर्म समायुक्तं लोभमोहसमावृतम् ।
दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु" ॥
एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम् ।
ज्वलमानन्तथा वह्निं शिरः स्थाने प्रदापयेत् ॥
चातुर्वर्ण्येषु संस्कार एवम्भवति पुत्रक ।
दिशः पश्यत्यनावृत्तदेशे सर्वं विधीयते ॥

सुवर्णः- षोडशमाषमित हेमः । लोके परत्र, हितम् वैतरणीसन्तरणम् । तत्र मन्त्रः—

'यमद्वारे महाघोरे कृष्णा वैतरणी नदी ।
तान्तर्त्तुकामो दास्यामि कृष्णां वैतरणीञ्च गाम् ॥"

कृष्णायाऽलाभेऽन्याऽपि देया । शुक्लामित्याद्यूह्यम् । दिव्यं - दिवेहितम् । पुरुषस्तूक्तादिः प्रेतं, वहिर्गतम् । प्रयाणं - शवप्रस्थापनम् । दानप्रकारमाह- तत इति निहन्मि प्रेतपापम् मोक्षणङ्करोति प्रेतस्य । वनस्पतिम् - तन्निकटं पैतरं वनम् चितां चैलं नवम् ।

ब्राह्मे—"अधोमुखो दक्षिणदिक्करणन्तु पुमानपि ।
उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः ॥"

अपिकारेण पुंसमुच्चयः । बन्धुः-सकुल्य मातृष्वस्रेयादिः । पूर्वकृत्य- माह–तीर्थस्येति गयादीनीत्यादि । दक्षिणसागरांस्तथा इत्यन्तावाहन- मन्त्रः । आवाहन इति शेषेध्येयम् । स्नपनम् तूष्णीमपसव्येन तथाऽवाहन- मपि । आवाहनञ्च तीर्थध्यानपूर्वकम् । ध्यात्वात्वित्यादि श्लोकः पाठ्यः । एवन्दहन्त्विति शेषेध्येयम् । ज्वलन्तीमुल्कां दक्षिणपाणिना गृहीत्वा चितां प्रदक्षिणीकृत्य स गच्छत्वित्यन्तेन शिरसि शवस्य योजयेत् । प्राचीमुख उपवि- श्य इति मिश्राः । दक्षिणामुखइति युक्तम् । प्रेतोद्देश्यकत्वात् । चैवेत्यव्यया-

भ्यां वारद्वयं प्रदक्षिणोल्काया शिष्टसम्मतत्वात् । ततःकपोतमात्रशेषे शवे प्रदक्षिणचिताभिमुख समित्क्षेपोल्कानिष्ठ कुठारप्रहारान् सप्तवारानग्निदः कुर्यात् ।

वैजवापः — "यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तन्तमेवेति कौन्तेय सदा तद्भाव भवितः ॥"

भारते—"यस्यावतारगुणकर्मविडम्बनानि येस्वविगमेविवसा गृणन्ति ।
तेनैकजन्म शमनं सहनैवहित्वा सञ्जात्ययावृतवृतं तमहं प्रपद्ये ॥"

प्रेतमरण्यङ्गत्वा यथोक्तमग्निङ्गमयित्वा अनवेक्ष्यमाणायन्त्येकंवाससो वीथीभूताः कनिष्ठपूर्वा यमगाथा गायन्तो यमसूक्तञ्जपन्तः ।

"अहरहर्न्नयमानो गामश्वं पुरुषं पशुम् ।
बैवश्वतो न तृप्यति सुरीया इव दुर्मतिः ॥"

वीथीभूताः—श्रेणीभूताः । यमगाथा अहरहरित्यादि तदेव यमसूक्तम् । वैदिकत्वान्नात्र शूद्राधिकारः ।

आश्वलायनः —सव्यात्तयोव्रजन्त्यनवेक्षामाणायतो मवहद्भवति । सव्यदिगभिमुखवक्राः अवहज्जनाभावे पारस्करः—सयुक्तमिथुनं याचेरन्नुदकं करिष्याम इति कुरुध्वं चैवं पुनरित्यशतवर्षप्रेते कुरुध्वं बेतरस्मिन् सर्वे ज्ञातयोऽभ्युपयन्त्या सप्तमात्पुरुषादशमाद्वा समानग्रामवासे यावत्सम्बन्धमनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यातिमकया ज्ञापनः सोऽशुचदघामिति पुरुषाः पठित्वा दक्षिणामुखा निमज्जन्ति प्रतानोदकं सकृत्प्रसिञ्चत्यञ्जलिनाचामेत् इति । मिथुनं स्त्रीपुंसौ विप्रजातीयौ चतुरङ्कुरुध्वंमित्यादि । इतरस्मिन् शतवर्ष प्रेते । कुरुध्वमित्युत्तरमेकवस्त्रा इति विप्रपरम् । राजन्यवैश्यावपसव्ये वासो यज्ञोपवीते कुरुत इति शङ्खवचनात् । शूद्रस्यापि वस्त्रद्वयम् । वैश्यवच्छौचकल्पस्त्विति वचनात् ।

"आदौ वस्त्रञ्च प्रक्षाल्य तेनैवाच्छादितैस्ततः ।
कर्त्तव्यन्तैः सचेलन्तु स्नानं सर्वमलापहम् ॥"

असाविति सम्बोधनात्प्रेतनादकथनम् । एतदिति लिङ्गमविवक्षितम् ।

तेनैष तिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठतामिति वाक्यम् । अधि-फलार्थन्त्वापस्तम्बः—त्रीनञ्जलीन्निर्वपेत्क्षार प्रभृत्येकादशे विरमेत् ।

शङ्खः—यथाबुद्धमवतीर्य नाङ्गङ्घर्षयेरन् ।

बौधायनः—यथा वा तीर्थमुत्तीर्याचमन्ति।

पारस्करः-- प्रेतस्पर्शिनो न ग्रामं प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य । अदर्शनादित्यनुषङ्गः । कायवशेन हारीतः--ब्राह्मणानुमत्या वा ।

याज्ञवल्क्यः--- "विदश्य निम्बपत्राणि दशनैद्वार वेश्मनः ।
आचम्याग्नि सलिलादिः गोमयं गौर सर्षपम् ।।"

प्रविशेयुः समालभ्य हुत्वाऽश्मानि पदं शनैः ।" आदिपदार्थः शमी । बैजवाप.--"अग्निर्नः शर्मयच्छत्वित्यग्निं स्पृष्ट्वा शमीमालभते, शमी मे पापं शमयत्विति अश्मानमालभन्ते, अश्मेव स्थिरोभूयासमिति ।"

आश्वलायन.--"प्राप्य सदोश्मानमग्नि गोमयमक्षतं तिलम् उपस्पृशन्ति ।" सदो गृहम् । तथा - "नैवास्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारलवणाशिनः स्युः । द्वादशरात्रं महागुरुषु ।"

वसिष्ठः --'त्र्यहमनश्नन्त आसीरन् क्रीतोत्पन्नेन वा वर्त्तेरन् ।" क्षारेत्यभिधानात् सैन्धवादिकमदुष्टम्, मातापित्राचार्यमरणेऽपि ।

गौतमः - "अहस्सु प्रथम तृतीय पञ्चम सप्तम नवमेषूदकक्रिया वाससाञ्च त्यागोऽन्त्येन्त्यानाम् । सपिण्डकृत्यमिदम् ।"

पुत्रैः प्रत्यहमञ्जलेर्देयत्वात् । त्यागः परिवर्त्तनमात्रम् । अन्त्यानाम् - शूद्राणाम् । अशौचान्त्यदिन एव वस्त्रपरिवर्त्तनम् । रजकस्य दानं द्विजानाम् । रजकस्य वस्त्रदाने--

बृहस्पतिः - "नवमे वाससां त्यागो नखलोम्नान्तदन्तिके ।"

हारीतः- त्रिपञ्चसप्तरात्रेषु स्नायीरन्नवमेऽहनि ।"

अस्थिसञ्चयमुपक्रम्य -

वैजवापः - तत्पूर्वन्तु त्रिरात्रङ्कर्मोपरमणम् । कर्मोपरमणञ्च - तैलाभ्यङ्गत्यागः ।

मार्कण्डेये - "तैलाभ्यङ्गो बान्धवाना मङ्गसम्वाहनञ्च यत् ।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः ।।"

जन्तुः - प्रेतः । साग्नेस्तु दाहो यतीनाम् । नारायणबलिश्च वर्षादूर्ध्वम् । विष्णु बलिश्चैकादशाहे - शुद्धिचिन्तामणौ विवेचितोः अस्माभिरुपेक्षितः । अग्निहोत्रसन्यासयोः कलौ निषिद्धत्वेन प्रायशो मैथिलानां शिथिलादरत्वात् । पतितस्य नारायणबलिरपि तत्रोक्तो नाभिधीयते मैथिलैः । पित्रादि पातित्यस्यानभ्युपगमेन तद्बलादिति मन्तव्यम् ।

पर्णनरदाहमाह -

ब्राह्मे -- "विदेशमरणेऽस्थीनि आकृत्याभ्युक्ष्य वारिणा ।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादिपूर्ववत् ।।
अस्थ्नामलाभे पत्राणि शतकान्युक्तयावृता ।
दाहयेदुक्तसङ्ख्याभिस्ततः प्रभृतिसूतकम् ।।
तदलाभे पलाशोत्थैः पत्रैः कार्यः पुमानपि ।
शतैस्त्रिभिस्तथा षष्ट्या शवर्न्नातैर्विधानतः ।।
वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्म्मणा ।
ऊर्णासूत्रेण वर्षात्तु प्रलेप्तव्यस्तथा यवैः ।।
एवं पर्णनरन्दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।
अथ पर्णनरन्दग्धे पात्रन्यासे कृतेमति ।।
गतेष्वग्निषु तद्देहादस्थि चेल्लभ्यते क्वचित् ।
तदर्द्ध दग्धकाष्ठानि तानि निर्मथ्य सन्दहेत् ।।
यद्यर्द्ध दग्धकाष्ठन्तु तदीयं नैव लभ्यते ।
तदा तदस्थि खण्डन्तु प्रक्षेप्तव्यं महाजले ।।"

पात्रन्यासादीत्यग्निहोतृपरम् शतकानि शतपरत्रयम् उक्तेति षष्ठीत्यर्थः। ततो दाहात् तदेव प्रपञ्चयति - तदलाभ इति। अस्थ्नामलाभ इत्यर्थं। पात्रन्यास इत्यग्निहोत्रपरम्। पर्णनरदाहानन्तरमस्थिलाभेत्वाह-अथेति। तदिति पर्णनरदाहेत्यर्थः। तमस्थिशेषखण्डमित्येक वचनं जात्यभिप्रायकम्।

आश्वलायनः—"अशीत्यर्द्धन्तु शिरसि ग्रीवायांदशयोजयेत्।
उरसि त्रिंशतन्दद्याद् विंशतिं जठरे तथा ॥
वाहुभ्याञ्च शतन्दद्यादङ्गुलीषु तथा दश।
द्वादशार्द्धं बृषणयोरष्टार्द्धं शिश्न एवच।
ऊरुभ्याञ्च शतन्दद्याद् त्रिशतं जानुजङ्घयोः।
पादाङ्गुलीषु दश च एतत्प्रेतस्यलक्षणम् ॥"

कृष्णसारचर्मोपरि दक्षिणोत्तरायतं सप्तवितस्तिमितं शरखण्डन्तयोर्वायप्रमाणं शवस्य पादयोर्हस्तद्वयप्रमाणौ शरखण्डौदत्वा सवृन्तपलाशपत्राणि शिरसि चत्वारिंशत् ग्रीवायां दशजठरे त्रिंशत् प्रत्येकंहस्तयोः पञ्चाशत् विंशत्यङ्गुलीषु विंशतिम् शिश्नञ्चतुर्भिर्वृषणेषट प्रत्येकमुरौ पञ्चाशत् प्रत्येकन्दश। जानुनोरूर्णा सूत्रेण पुरुषाकृतिं निर्मायमृगचर्मणा चोर्णसूत्रै र्बद्ध्वा यवचूर्णैर्विलिप्य मृगचर्मणाऽच्छाद्य चितायामारोप्य असौ स्वर्गाय लोकाय स्वाहेति पात्रन्यास पूर्वकंसाग्निङ्कृत्वा - सुदुष्करमित्यादिना निरग्निन्दहेत्।

छन्दोगपरिशिष्टम्—

"एष एवागृहीताग्नेः प्रेतस्यविधि रुच्यते। स्त्रीणामिवाग्निदानंस्यात्। स्त्रीणामिवेत्यनेन वैदिकमन्त्रनिवृत्तिः कृत्वेत्यादिमन्त्रश्चविधीयते। त्रिरात्रमशौचं दाहकर्त्तुरेव। न तु बान्धवानामिति।

शौकोपनोदनङ्गीतायाम्—

"अव्यक्तादीनि भूतानिव्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिवेदना॥
देहिनोऽस्मिन् यथादेहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्ति र्धीरस्तत्र न मुह्यति॥"

व्यसः--"माता पितृ सहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यस्यन्ति चापरे ।।"

रामायणे-"शोचमानास्तु सस्नेहा बान्धवा सुहृदस्तथा ।
पातयन्ति गतं स्वर्गमग्रपातेन राघव ॥
श्रूयते हि नरव्याघ्र पुरा परमधार्मिकः ।
भूरिद्युम्नोगतः स्वर्गंशोकवाक्येन राघव ॥
कृत्स्ने वै क्षयिते लोके पुनः स्वर्गान्निराकृतः ।
साग्निनापि च दग्धेऽपि प्रभाते स्वकृतः प्रभुः ॥
मन्युनाविष्टितस्तस्मादुत्तिष्ठेषु च मा शुचः ।"

## अथ पिण्डदानम्

ब्राह्मे--"शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीयेन तु कर्णाक्षि नासिकायास्तु समाहितः ॥
गलांशभुजवक्षांसि तृतीयेन च दापयेत् ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥
जानु जङ्घे तथा पादौ पञ्चमेन तु सर्वदा ।
सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ॥
दन्तलोमाद्यष्टमेन वीर्यन्तु नवमेन च ।
दशमेन तु पूर्णत्वन्तृप्तताक्षुद्विपर्ययः ॥
भाषेत तच्च ते पिण्डम् यज्ञदत्तस्य पूरकम् ।
सद्यश्शौचे प्रदातव्याः सर्वेऽपि युगपत्तथा ॥
त्र्यहाशौचे प्रदातव्यं प्रथमेत्वेक एव हि ।
द्वितीयेह्नि चत्वार स्तृतीये पञ्च एव हि ।।"

एष शिरष्पूरकपिण्ड इत्यादि प्रयोज्यम् । एक इत्यादि काण्वशाखि-परम् । माध्यन्दिनान्प्रत्याह--

पारस्करः--"प्रथमेदिवसेदेयास्त्रय पिण्डाः समाहिताः ।
द्वितीये चतुरोदद्यादस्थिसञ्चयन्तथा ॥

त्रींस्तुदद्यात्तृतीयेऽह्नि वस्त्रादिक्षालनन्तथा ॥"

छन्दोगानान्तु परिशिष्टकारित्वेन कात्यायनस्यवाक्येनैव निर्णयः। एकाहाशौचेत्वेकाह एव दशपिण्डाः। पक्षिण्यशौचे पञ्च पञ्च दिनद्वये पिण्डा इति न्यायलभ्यत्वान्नोक्तं मुनिना। तथा मृण्मये तां रात्रिं क्षीरोदको विहायसि निदध्युः। प्रेतात्र स्नादि पिबेदं क्षीरमिति। तान्दाहसम्बन्धिनीं विहायत्रिकाष्ठिकोपरि।

मात्स्ये - "तस्मान्निषयमाकाशे दशरात्रं पयस्तथा।
सर्वथा तापशान्त्यर्थमध्वश्रमविनाशनम् ॥"

प्रयोजनम् - तापश्रमनाशनम्।

"असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥

दद्यादग्निम्। श्राद्धकर्त्ताऽपि दाहाकारी पिण्डान्दद्यात्। पूर्वक्रियाम्विना मध्यमक्रियात्वस्य षोडश श्राद्धेऽनुपपत्तेः। मध्यमक्रियाम्विनोत्तरक्रियात्वस्यपार्वण इवेति प्रतिभाति।

ब्राह्मे—"देयस्तु दशमः पिण्डो राज्ञो वै द्वादशेऽहनि।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा ॥
शूद्रस्य दशमः पिण्डो मासपूर्णेऽह्नि दीयते।"

षष्ठः कर्त्तरि न कर्मणि क्षत्रादेः पुत्रस्य पित्रा तथाऽकरणात्।

"देशेधर्मान् पुरस्कृत्य बन्धूनां क्वचिदेव हि।
इत्युक्ताशौचतुल्यास्तु प्रेतपिण्डान् वपत्यपि ॥"

देशे विशेषेऽशौचाहःसंख्यकाः पिण्डादेया। नशमपिण्डवदधिकपिण्डा बोध्याः।

"मृण्मयं भाण्डमादाय नरः स्नातः सुसंयुतः।
लगुड़ं सर्वदोषघ्नं गृहीत्वापः समुद्धरेत् ॥

ततश्चोत्तरपूर्वस्याग्नि प्रज्वालयेदिति ।
तण्डुल प्रसृतन्तत्र प्रक्षाल्य द्विः पचेत्स्वयम् ।
सपवित्रैस्तिलैर्युक्ताङ्केशकीटविवर्जिताम् ॥
द्वारोपान्ते ततः क्षिप्त्वा शुचि वा गौरमृत्तिकाम् ।
तत्पृष्ठे संस्तरेद्दर्भान् याम्यायां देशसम्भवान् ॥
ततोऽवनेजनन्दद्यात्संस्मरेद्गोत्रनामनी ।
तिल सर्पि र्मधुक्षीरैः सञ्चितन्तप्तमेवहि ॥
दद्यात्प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः ।
फलमूल गुडक्षीर तिलमिश्रन्तु कुत्रचित् ॥
अर्घैः पुष्पैस्तथादीपैस्तोयैश्चापि सुशीतलैः ।
उर्णातन्तुमयैः शुद्धैं र्वासोभिः पिण्डमर्चयेत् ।
प्रयाति यावदाकाशं पिण्ड वाष्यमयी शिखा ॥
तावत्तत्सम्मुखष्तिस्ठेत् सर्वन्तोये क्षिपेत्ततः ।
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ॥
एकमेवाञ्जलिस्तोयं पात्रमेकञ्च दीयते ।
द्वितीये द्वौ तृतीये त्रीँ चतुर्थे चतुरस्तथा ॥
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त चैवहि ।
अष्टमेऽष्टौ च नवमे नव वै दशमे दश ॥
तेन स्युः पञ्च पञ्चाशत्तोयस्याञ्जलयः क्रमात् ।
तावन्ति तोयपात्राणि संयुक्तानि तिलोदकैः ॥"

उत्तरपूर्वस्यां गृहादैशान्यां दिशि शुद्धां पवित्रतिलाद्यसंयुक्तान्दर्भानिति कृतोपदेशेन छिन्नमूलेनिवृत्तिः। देशेत्यनेन विदेशदेशागतकुशव्यावृत्तिः। अर्घैरिति प्रत्यवनेजनपरम। तप्तेति चपसमुच्चयः। क्षीरेति दुग्धत्यागपरम्। मयटोऽभेदोऽवयवित्वञ्चार्थः। वासःपदं तन्तोर्वस्त्रस्य च प्रतिपादकम्। विधेयगतञ्च बहुत्वमविवक्षितम्। तच्च तन्तूनां वस्त्राणामुभयो र्वा।

हारीतः--"अक्लृप्तचूड़ा ये बाला ये च गर्भाद्विनिःसृताः।
ये मृता वाप्यसंस्कारास्तेषां पिण्डं प्रदीयते॥"

भूमाविति कुशास्तरणनिवृत्तिः। दाहपक्षे चेदम्।

अङ्गिराः---"भूमौ पिण्डप्रदानञ्च कर्मकृत्वा विधानतः।
गन्धमाल्यैः समभ्यर्च्य ततो भोजनमिष्यते ॥"

इदं साग्निपरम्। चतुरङ्गुलविस्तार गभीरतारकखातरूपायाः कर्षास्तेषामेव श्रुतत्वात्। अत्रापि कुशास्तरणनिवृत्तिः गन्धमाल्यैरिति धूपादेरप्युपलक्षकम्।

शङ्खः--"भूमौ पिण्डं पानीयमुपले वा दद्युः।" उपले-प्रस्तरे-पाषाणमय-देशे शुद्धभूम्यलाभे। तथा- "तिलान्ददत पानीयमुपले ददत जागृते।" इदं माल्यादिदानम्--भूमावित्यनुषङ्गात्तत्रैव इति मिश्राः।

वयन्तु--पिर्येव तदन्यत्र दृष्टत्वात्। अनुषङ्गस्यामालकत्वादिति ब्रूमः। जागृत एष्वर्थेषु सावधानोभवत्। नियतसमयकर्त्तव्यतयाऽस्थिसञ्चयवत्-क्षतादिना न प्रतिबन्धः पिण्डदानस्य।

## अथास्थिसञ्चयः

अशौच तृतीयभागेऽतीते प्रागुक्तम्।

ब्राह्मे- "क्वचितृतीये विप्रस्य चतुर्थे क्षत्रिययस्य च।
पञ्चमे वैश्यजातेश्च शूद्रस्य दशमेऽहनि ॥
अस्न्थाञ्च तु यः प्रेते क्रियते दश गौरवात्।
जीवतामपि वर्णानां संस्पर्शे चाप्ययङ्क्रमः ॥"

देशगौरवात् -देशविशेषसदाचारबलात्।

"चतुर्थे ब्रह्मणानान्तु पञ्चमेऽहनि भूभृताम्।
नवमे वैश्यजातीनां शूद्राणान्दशमात्पर: ॥
कर्त्तव्यस्तु नरैः श्राद्धं देशकालाविरोधतः ॥"

परत्रैकादशदिने श्राद्धमेकोद्दिष्टम्। देशेति -देशविशेषाचारबलात्तत्र देशे दशाहपर्यन्तमकृतेश्राद्धे कालाविरोधादित्यर्थः।

"श्मशानदेवतायागं चतुर्थे दिवसे ततः।
भवन्ति पूजिता यस्मातत्रस्थाः शङ्करादयः॥

स्नातैः सुधौतवस्त्रैश्च श्मशानस्य समीपगैः ।
स्वजातिविहितैर्द्रव्यै यथाशक्त्या समाहितैः ॥
मृण्मयेषु च भाण्डेषु कुण्डेषु चरुकेषु च ।
स्वपक्वै र्भक्ष्य भोज्यैश्च पायसैर्मधुरैस्तथा ॥
फलैर्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः ।
कैश्चिदर्घ्यं प्रदातव्यं कैश्चित्पुष्पं सुशोभनम् ॥
धूपो दीपस्तथा माल्यम् कैश्चिद्द्येयं त्वरान्वितैः ।
तत्र पात्राणि पूर्णानि श्मशानाग्नेः समीपतः ॥
कैश्चिद्देयानि सर्वाणि पानीयान्यक्षतानि च ।
निवेदयेतिवक्तव्यं तैः सर्वैरनहङ्कृतैः ॥
नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ।
येऽस्मिन् श्मशाने देवाःस्यु भगवन्तः सनातनाः ॥
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ।
प्रेतस्यास्य शुभान लोकान् प्रयच्छन्तु च शाश्वतान् ॥
अस्माकमायुरारोग्यं सुखञ्च ददताम्वरम् ।
एवङ्कृत्वा बलीन् सर्वान् क्षीरेणाभ्युक्ष्य वाग्यतः ॥
विसर्ज्जनन्तु देवानां कर्त्तव्यन्तु समाहितैः ।
ततो यज्ञियवृक्षेभ्यः शाखामादाय वाग्यतः ॥
अपसव्यंक्रमाद्वस्त्रङ्कृत्वा कश्चित्सगोत्रजः ।
प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च ॥
पञ्चगव्येन सुस्नाप्य क्षौमवस्त्रेण वेष्ट्य च ।
प्रक्षिप्यमृण्मये भाण्डेनवे साच्छादने चते ॥
अरण्ये वृक्षमूले वा शुद्धे संस्थापयेत्यपि ।
गृहीत्वाऽस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ॥
ततस्सम्माज्र्जनम्भूमेः कर्त्तव्यङ्गोमयाम्बुभिः ।
पूजा च पुष्पधूपाद्यै र्बलिभिः पूर्ववत्क्रमात् ॥

भूमेराच्छादनार्थञ्च वृक्षः पुष्करकोऽपि वा ।
पट्टको वा प्रकर्त्तव्यस्तत्रसर्वैर्विधानतः ॥"

छन्दोगपरिशिष्टे –

"अपरेद्युस्तृतीये वा अस्थिसञ्चयनम्भवेत् ।" नवम इति षष्ठे करणाशक्तौ स्वजातीत्यनेन । शूद्राणाङ्कपिलादुग्धनिषेधः । चरुकेषु - प्रादेशविस्तारगभीरताश्रयमृद्भाण्डेषु । प्रधानेति । यस्तत्परम् । क्षौमं - दुकूलम् । अष्टाङ्गमिति - भक्ष्यम् , पयम् , फलम् , मूलम् , गन्धः पुष्पम् , धूपो, दीपः, तण्डुलादि अर्घ्यञ्चेति । पुष्करको - देवालयः । पट्टक - इष्टका प्रस्तररचित भूभागः । काष्ठचतुष्टय निर्मितश्चतुष्कोणः । सभोपवेशनार्थो वा । सम्वर्त्तः- "प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा" । अस्थिसञ्चयनङ्कार्यमिति ।

कात्यायनः—सञ्चयनाच्चतुर्थ्यामयुग्मान् ब्राह्मणान् भोजयित्वा पलाशवृन्तेनास्थीनि परिवृत्याङ्गुष्ठाभ्यामादाय पलाशपुटेप्रास्यतिशस्यनकाः कर्द्दमञ्च श्मशानेऽस्थीन्यङ्कयित्वा सुरभिमिश्राणि दक्षिणपूर्वायताङ्कर्षङ्कृत्वा कुशानास्तीर्य वस्त्रवैकृतञ्च हारिद्रं रागेति निर्वपत्यस्मिन्नेतद्वाजसनेयिकम् । शमीपत्र - मवकाः । सकण्टक शैवाललताः । श्मशाने वर्त्तमानान्यस्थीन्यङ्कयित्वा सँयोज्य हरिद्राक्तमिति, विकृतवस्त्रं रागेत्यदि मन्त्रेण पिबति । वाजसनेयीसाग्निः । छन्दोगपरिशिष्टे—

"स्नानान्तं पूर्ववत्कृत्वा गव्येन पयसा ततः ।
सिञ्चेदस्थीनिसर्वाणि प्राचीनामित्यभाषयन् ।
शमीपलाशशाखाभ्यामुद्धृत्योद् धृतभश्मनः ।
आज्येनाभ्युक्ष्य गव्येन सेचये द्गन्धवारिणा ॥
मृत्पात्रसम्पुटीकृत्वा सूत्रेण परिवेष्टयेत् ।
अभ्रंशिन्यां शुचौदेशे निखनेद्दक्षिणामुखः ॥
पूरयित्वा वटपुटम् पिण्डं शैवालसंयुतम् ।
दत्वोपरिसमं शेषम् कुर्यात्पूर्वोक्तकर्मणा ॥
एष एवागृहीताग्नेः प्रेतस्य विधिरुच्यते ॥"

पूरयित्वा - मृद्भिरुपरिदत्वा पूर्वदिनसमं पिण्डदानञ्च प्रागेवकुर्यात् । साग्नेरिति निरग्नेरपि सागमस्येषविधिः । वाजसनेयिनस्तु कात्यायनेनप्राग्दर्शितोविधिः ।

आश्वलायन - एकैकमस्थ संह्लादपक्षन्तोनिदध्युः ।

ब्राह्मे -"तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीतटे ।
कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ॥
अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये कथञ्चित् ।
सद्भावकस्यापि दयाभिभूतास्तेषान्तु तीर्थानि फलप्रदानि ॥
कुलद्वयञ्चाप्यथ वर्ज्जयित्वा मातापित्रोर्ज्जन्मभूम्याश्रितञ्च ।
अस्थीति चान्यस्यानयनन्दूरतश्च रागक्षयञ्चलभतेदुष्कृतञ्च ॥
भागीरथी यत्र गताऽथतीर्थे कुलेनरः क्वापि यदा विपन्नः ।
तदा तदानरस्तथाऽथभक्त्या भावेनचास्थीनि विनिक्षिपेच्च ॥
स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्यम् ।
ततस्तु मृत्पिण्डपुटे निधाय पश्येद्दिशं प्रेतगणोपगूढम् ॥
नमोऽस्तु धर्माय वदन् प्रविश्य जलं स मेप्रीत इति क्षिपेच्च ।
उत्थानभास्वन्तमवेक्ष्य सूर्यं सदक्षिणां विप्रवरायदद्यात् ॥
एवं स्थिते प्रेतपुरेस्थितस्य स्वर्गेगतिः स्याच्च महेन्द्रतुल्या ।
मातुः कुलं पितृकुलं वर्ज्जयित्वा नराधमः ।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणञ्चरेत् ॥"

कुलद्वयं मातुः पितुश्च कुलद्वयम् ।

क्षेपप्रकारमाह -स्नात्वेति । उत्थायजलादुत्तीर्य कुलं कुलद्वयं नीत्वालोभेन ।

यमः- "गङ्गातोये यस्यास्थि प्लवते शुभकर्मणः ।
न तस्य पुनरावृत्ति र्ब्रह्मलोकात्कदाचन ॥
दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि गच्छति ।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ॥"

कदाचन कल्पमध्येयादृक् स्वाराज्यादिः ।

ब्राह्मे — "यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमन्त्वहः ।
स तत्र वस्त्रशुद्धिञ्च गृहशुद्धिङ्करोत्यपि ॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम् ।
ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे तु वाससी ॥
अन्त्यानामाश्रितानाञ्च त्यक्त्वास्नानङ्करोति च ।
केशश्मश्रुनखानाञ्च यत्त्याज्यं तज्जहात्यपि ॥
गौरसर्षपपक्वेन तिलकल्केन संयुतम् ।
शिरःस्नान - ततः कृत्वा तोयेनाचम्य वाग्यतः ॥
वासोयुगं नवं शुक्लम् वरणं शुद्धमेव हि ।
गृहीत्वा गां सुवर्णञ्च मङ्गलानि शुभानि च ॥
स्पृष्ट्वा सङ्कीर्त्तयित्वा च पश्चाच्छुद्धो भवेन्नरः ॥"

वस्त्रशुद्धि रूपान्त्यदिनदत्तप्रच्छदपराहे रजकद्वारा क्षालनम् । लोमनासादिवर्त्तिश्मश्रवादित्यागम् । स्नानमाश्रितनापितायाधरीयोत्तरीयदानम् । नूतनवस्त्रयुगपरिधानमाचमनमितिक्रमः । सङ्कीर्त्तनं गवादेरुत्कर्षकथनम् । गृहशुद्धिरूपलेपनाशुद्धभाण्डत्यागादिः

हारीतः — अस्मादरिष्टगोहिरण्यादीनालभ्य प्रवेशनम् । अरिष्टो- निम्बो- हरिठ इति प्रसिद्धो वा । आदिपदार्थो - गोमय सर्षपदूर्वादिः ।

मनुः — "विप्रः शुद्ध्यत्यपःस्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यःप्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥"

अशौचान्त्यदिने स्नानादिकृत्वाऽग्रिमदिने शुद्ध्यतीत्यर्थः ।

आपस्तम्बः — पौर्णमास्यां वैरमणे मातरिपितर्याचार्य्यसंस्थितेषु चोदकस्पर्शनं तावन्तं कालमनुभाविनाञ्च परिवापनं, न समावृत्तावपेरन्नान्यत्र वीहारादित्येके । अथापि ब्राह्मणं रिक्तो वा एषो न पिहितस्तस्येदमपिधानं यच्छिखेति"। मात्रादित्रयमरणेऽग्रजभ्रातृमरणेऽशौचदिनेषु सौलस्नानमन्त्यदिने शिरोवपनञ्च । तेन च वपनेन क्लृप्तकेशनखश्मश्रुरित्यपिसङ्गच्छते । ननु कर्त्तव्या शिरः केशच्छेदनङ्कार्यम् । "वृथा छिनत्ति यः केशान् तमाहुर्ब्रह्मघातकम् " इति स्मरणात् । वैरमणे विरमणभाजि पितरि पौर्णमासीमुण्डनञ्चानग्नेरपि ज्ये-

ष्ठानां कनिष्ठानाञ्च - श्मश्रुनखत्यागमात्रम् । अशौचान्तकृतश्मश्रुकर्माण इति विष्णुवचनात् । वीहारो - यज्ञः । एके आपस्तम्बशाखायामुख्याः । केचित्तु एकपदं न मुख्यार्थकम्, किन्त्वन्यार्थकमिति वाजसनेयिनां न मुण्डनमित्याहुस्तच्चिन्त्यम् सशिखवपनस्यैव तथापि निषेधात् । अत्र मानं वदन्ति—अथापीत्यादि अनभिहितः - शिखाच्छादनशून्यः । अतएव रिक्तः शिखासाध्यकर्मशून्यः ।

"गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते ।
आधाने सोमपाने च मुण्डनं सप्तसु स्मृतम् ॥"

इति वचने गुरुपदेन ज्येष्ठभ्रातुरपि कथनम् । गङ्गायां यमुनायुक्तायां भास्करक्षेत्रे लोलार्क्कक्षेत्रे इदञ्च प्रयाग, मथुरा, अयोध्या, गयादि विशेषरहित मुण्डनक तीर्थानां सूर्यविनिस्मृतपूर्णचन्द्रवत्तीर्थानां चोपसङ्ग्राहकमुपलक्षणतया मथुराऽयोध्यामाहात्म्यकथक - वराहपुराणे - गयाविधिकथकाग्निपुराणे च तथा स्मरणात् ।

"वर्ज्जयित्वा गयाङ्गङ्गामिति" त्वपपाठः । अग्निपुराणविरोधात् । "वर्ज्जयित्वा कुरुक्षेत्रमित्याचारानुसारिणः पाठस्य युक्तत्वात् सर्वतीर्थपदस्य बहुब्रीहिणा प्रयोगबोधेन सामर्थ्येऽपि कर्मधारयार्थस्यैव शक्त्यावगतेः बहुवचनस्वरसाच्च । तुलसीनिकटादौ न स्वर्णलोप वासोविशेष विहित मथुरादिपरत्वात्तीर्थ पदस्येयाकलयामः । स्पष्टमाह—

विष्णुः—"प्रयागे तीर्थयात्रायां पितृ मातृ वियोगतः ।
कचानां वपनङ्कुर्याद् वृथा न विकचो भवेत् ॥"

चरमचरणस्वरसात्सामग्रनिःशेषमुण्डने वह्निकादिना दैवात्कचापगमे वा न दोष इत्यवसेयम् । एवं काञ्चन्देहशुद्धाद्ययुक्तायां प्रकारान्तरादपि तामाह—

याज्ञवल्क्यः—"कालोऽग्निः कर्म मृद्वायु र्मनोज्ञानं तपोजलम् ।
पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥

कालो—दशरात्रादिः - अग्नि-र्द्दहादिसंयुक्तः, कर्म-सन्ध्यादिः ।

"अकार्यकारिणान्दानम् वेगो नद्यश्च शुद्धिकृत् ।
शोध्यस्य मृच्चतोयञ्च सन्यासो वै द्विजन्मनाम् ॥
तपो वेदविदां क्षान्ति विदुषां वर्ष्मणोजलम् ।
तपः प्रच्छन्न पापानां मनसः सत्यमुच्यते ॥
भूतात्मनस्तपोविद्याज्ञानं बुद्धे विशोधनम् ।
क्षेत्रज्ञस्य पुरज्ञानाद्विशुद्धिः परमा मता ॥

मृतश्राद्धदेशादौ क्षिप्तावायुः प्राणायामादिध्रियमाणः मनोहारिध्यान-परं ज्ञानम् - श्रवणमननादिः । पश्चात्तापः—

"कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं कृष्णानुस्मरणं परम् ॥

निराहारः - एकादश्याद्युपवासः । दानम् धेन्वादेः प्रायश्चित्तरूपम् । वेदविदां तपस्तदभ्यासः । "वेदाभ्यासो हि विप्राणाम्विशेषात्तप उच्यत" इति दक्षसम्वादात् ।

विदुषां संसारासारताज्ञानि-ाम् क्षान्ति-विषयतितिक्षा । वर्ष्मणो व्यापकं जलस्नानम् । तपः प्राजापत्यादिः । सत्यमसत्याभिध्याननिवृत्तिः भूतात्मनो-जीवात्मनः, तपो विद्ये निष्काम कर्मात्मसाक्षात्कारो बुद्धे महत्तत्व-स्यात्मभिन्नत्वेन ज्ञानम् । क्षेत्रज्ञस्य जीवस्येश्वरस्याभेदज्ञानम् ।

अथ - देहावयव शुद्धावभिधातव्यायां स्वभावशुद्धान्यन्यान्यपि लिख्यन्ते—

यमः - "अदोषञ्च मुखं स्त्रीणां गवां पृष्ठमजामुखम् ।
एतानि नित्यशुद्धानि यच्च वाचा प्रशस्यते ॥
श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् ।
क्रव्यादिभिश्च हतस्यान्यैश्चाण्डालाद्यैश्च दस्युभिः ॥
बालकै र्यत्परिक्रान्तं स्त्रीभिराचरितञ्च यत् ।
मशकै र्मक्षिकाभिश्च निलीनं नोपहन्यते ॥
आत्मशय्याशनं वस्त्रं मेध्यं बालः स्वभूषणम् ।
आसनं शयनं यानं स्त्रीमुखं कुतपं क्षुरम् ॥

न दूषयति विद्वांसं यज्ञेषु चमसन्तथा ।
मेध्यानुलिप्तं शौरत्थो विभ्रुटछाया च मक्षिका ।।
अजोहस्ती रणेछत्रं रश्मयेश्चन्दुसूर्ययोः ।
भूमिरग्नीरजोवायुरूर्णा नौका घृतं पयः ।।
सर्वाश्चैतानि शुद्धानि स्पर्शमेध्यानि नित्यशः ।
अदुष्टा सन्तताधारा वातोद्धूताश्च रेणवः ।।
आकराः शुचयस्सर्वे वर्ज्जयित्वा सुराकरम् ।।"

पैठीनसिः-- स्त्रीमुखं रतिचुम्बने ।

विष्णुः-- "नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ।।"

शकुनिवत्सशुनामुच्छिष्टतया - फलदुग्धमांसानि न दुष्यन्ति ।
"नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः ।।"

शातातपः- "रेणवः शुचयस्सर्वे वायुना समुदीरिताः ।
अन्यत्र रासभासाक्ता विपुलानि च वाससा ।।"

वृहस्पतिः- मारुतश्चैव दर्वी च मार्जारश्च सदाशुचिः ।

देवलः- "गोसकृच्छुचिदेशस्थं श्मशानादुदधतन्त्वपि ।
असम्याऽपि भवेच्छुद्धा शुक्रविण्मूत्रवर्जिता ।।
पृष्ठतो गौ र्गजः स्कन्धे सर्वतोऽश्वः शचिस्तथा ।
नृणां मूत्रपुरीषे च अमेध्ये मलमेव च ।
गो पुरीषञ्च मूत्रञ्च नित्यं मेध्यमिति स्थिति ।।"

वृहस्पतिः- "पादौशुची ब्राह्मणानामजाश्वानां मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणियोषिताम् ।।
रोमोद्भेदे शशीभुङ्क्ते गन्धर्वः कुचदर्शने ।
अनलन्तु रजोयोगे कन्यांभुङ्क्ते च नान्यथा ।।

बलात्कारोपभुक्ता वा चौरहस्तगताऽपि वा ।
स्वयं विप्रतिपन्नत्वादथ वा विप्रसादिता ॥
सोमः शौचं ददौ तासां गन्धर्वश्च शुभाङ्गिरम् ।
पवित्रं सर्वभक्ष्यञ्चमेध्या वै योषितोह्यतः ॥"

याज्ञवल्क्यः- "व्यभिचारादृतौ शुद्धि गर्भेत्यागो विधीयते ।
न स्त्रीदुष्यति जारेण नाग्निर्दहनकर्मणा ॥
नापोमूत्रपुरीषाभ्यां न द्विजो वेदकमणा ।
स्वच्छन्नगा तु या नारी तस्यास्त्यागो विधीयते ॥
नचैवं स्त्रीबधङ्कुर्यान्नचैवाङ्ग विकर्त्तनम् ।"

वसिष्ठः- "चतस्रस्तु परित्याज्या शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गतोपगता च या ॥
अत्यन्तदूषिता नारी न परित्यागमर्हति ।
सर्वासां निःकृतिः प्रोक्ता नारीणान्तु विशेषतः ॥
स्त्रियः पवित्रमतुलं नैता दुष्टास्तु कर्हिचित् ।
मासिमासि रजः स्त्रीणां दुष्कृतान्यपकर्षति ॥"

मरीचिः- "येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः ।
तेषु तं नावमन्येत धर्माचारश्च तादृशः ॥
येषु येषु च ये देवा येषु देशेषु ये द्विजाः ।
येषुस्थानेषु यत्तोयं या च यत्रैव मृत्तिका ।
तान्येव तत्रादत्तव्या नीतिं प्राहप्रजापतिः ॥"

मनुः- "ऊर्द्ध्वंनाभेरमेध्यानि तान्यमेध्यानि सर्वशः ।
यान्यधस्थान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥"

बौधायनः- "नाभेरधःस्पर्शनञ्च कर्मयुक्तो विवर्ज्जयेत् ।"

देवलः- "शुचिभूतं स्वयं शुद्धं पवित्रञ्चैव केवलम् ।
मध्यञ्चतुर्विधं लोके पूजानां मनुरब्रवीत् ॥

नवम्वा निर्मलम्वाऽपि शुचीति द्रव्यमुच्यते ।
स्वयमेव हि यद्द्रव्यं केवलं मेध्यतामियात् ।।
स्थावरञ्जङ्गमम्वाऽपि स्वयं शुद्धमिति स्मृतम् ।
अन्यद्रव्यैरदुष्यं यत्स्वयमन्यानि शोधयेत् ।।
हव्यकव्येषु यत्पूज्यं तत्पवित्रमुदाहृतम् ।"

यमः- "दिवा सूर्यांशुभिस्तप्त रात्रौ नक्षत्रमारुतैः ।
सन्ध्ययोरप्युभाभ्याञ्च पवित्रं सर्वदा जलम् ।।

व्यासः—"अच्छिन्नाग्रञ्च यद्वस्त्रं मृदा प्रक्षालितञ्च यत् ।
अहतं धौतवस्त्रञ्च तत्पवित्रमिति स्थितिः ।।"

मनुः— "त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्ट मद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।।"

मुखं स्त्रीणां रतिचुम्बनएव । पैठीनसिसम्वादात् । क्रव्याद्भिः सेनाद्यैः । वाचेति - अदृष्टदोषं जलशोधितञ्च मनुसम्वादात् । आचरितमुपभुक्तशय्या-विलीनं मिश्रितम् भस्माम्बुसेकानन्तरम । बालः स्वपुत्रः, आसनादावित्यनु-षङ्गः । कुतुपं खड्गपात्रम् । क्षुरम् - चाण्डालादौ व्यापृतमपि । मध्ये भक्ता-दिलिप्तं चमसं, छाया गर्द्दभान्यस्यजन्तोः , विभीतकाद्यन्यस्यवृक्षादेः । छत्रं - मृतकमस्तकस्थमपि, भूमि र्गोमयादिस्पर्शे, अजाश्वौ भक्ष्यादिस्पर्शेन । आपो मृतदेहादियुक्ता घटशतोद्धारानन्तरं पञ्चगव्येन गङ्गाजलस्पर्शेन, दुग्धघृतादि - वह्निस्पर्शेन शुद्धानि । आकरास्कैलादेः । समूहनिः-सम्मार्ज्जनी । यूपं गोः । अश्वा वड़वा, योषितां रतिकाले । चौरश्चाण्डालादिभिन्नः । विप्र-सादिता - विप्रलब्धः । व्यभिचारात् - वलादिकारितात । न स्त्रीभिः वेदकर्म याजनादिना । एवं - स्वच्छन्द व्यभिचारेऽपि । जुहि्नतश्चाण्डालादिः । अत्यन्तेति - बलात्कारपरम् । स्थानेषु - देशेषु । देवाः - ग्रामादिदेवताः । द्विजाः - विप्राः । मार्ज्जारादि च स्वयंशुद्धम् । छातुर्गैरकादिः । त्रीणि-समुदितान्यदृष्टत्वादिराचरन्ति । ब्राह्मणानामित्युपलक्षणम् ब्राह्मणसम्मता-नीतिवाऽर्थः ।

अथ भू जल तेजसां शुद्धिः प्रसङ्गेनाभिधेयाः । तत्र- भूशुदिरादावुच्यते—

देवलः—"पञ्चधा वा चतुर्द्धा वा भूरमेध्या विशद्ध्यति ।
द्विष्ठा द्विधा त्रिधावाऽपि शोध्यते सलिनैकधा ॥
दहनं खननं भूमेरुपलेपनवापने ।
पर्जन्यवर्षणञ्चेति शौचं पञ्चविधं स्मृतम् ॥
प्रसूते गर्भिणी यत्र म्रियते यत्र मानवः ।
चाण्डालैरुषितं यत्र विन्यसेद्यत्तत्र वै शवः ॥
विण्मूत्रोपहतं यच्च कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरध्येति दृश्यते ॥
क्रिमिकीटपदक्षेपे दूषिता सा च मेदिनी ।
द्रप्सापकर्षणैःक्षिप्तै र्वान्तै र्वा दुष्टताम्व्रजेत् ॥
नखदन्ततनूजत्व ओषपांशुरजोमलैः ।
भस्म पङ्क तृणैर्वाऽपि प्रच्छन्ना मलिनाभवेत् ॥"

अमेध्या दुष्टा मलिनेति त्रिधा भूराद्यायान्दहनादि पञ्चकमशक्तौ चतुष्कं दुष्टायान्त्रयम् । तदशक्तौ - तु द्वयम् । चरमायान्त्वेकमेव शुद्धिकृदितिसमुदायार्थः । वापनम् - मृदन्तरेण पूरणम् । द्रपसं - कठिनश्लेष्म ।

मनुः— "सम्मार्ज्जनेनाञ्जनेन सेकेनोल्लेखनेन च ।
गवाञ्च परिवासेन भूमिः शुद्ध्यति पञ्चधा ॥"

अञ्जनङ्गोमयोपलेनपनम् । उल्लेखनम् - कश्मलतक्षणम् । परिवासो - निश्यवस्थानम् । अत्र निर्ल्लेपे सेकपरिवासौ मलिनायां - सम्मार्ज्जनाञ्जने । अमेध्यानान्तु तक्षणाञ्जने ।

बौधायनः—घनाया भूमेरुपघात उपलेपनम् सशुषिरायाः कर्षणम् क्लिन्नाया अमेध्यमाकृत्य प्रच्छादनम् ।

चतुर्भिः शुद्ध्यते भूमिः गोभिराक्रमणाद्यतः ।
दहनादभिकर्षणात्पञ्चमाच्चोपलेपनात् ॥"

शुषिरं छिद्रम्। क्लिन्ना अमेध्यार्द्रा प्रच्छादनम् - शुद्धमृदा-अभिमर्षणम्।

सम्वर्त्तः - गृहशुद्धिम्प्रवक्ष्यामि अन्तःस्थशवदूषिते।
प्रोत्सृज्य मृण्मयं भाण्डं सिद्धमन्नन्तथैव च ॥
गृहादपोद्य तत्सर्वङ्गोमयेनोपलेपयेत्।
गोमयेनोपलिप्याऽथ छागेनाघ्रापयेद्बुधः ॥
ब्राह्मणै र्मन्त्रपूतैश्च हिरण्य कुश वारिणा।
सर्वमभ्युक्षयेद्वेश्म ततः शुद्ध्यत्य संशयम् ॥
ब्राह्मणागारसद्भूमि देवागारे तथैव च।
मेध्याञ्चैव सदा मन्ये गवाङ्गोष्ठे तथैव च।"

सदा गोमयोपलेपनम्विनापि। "गृहेऽवजातिसंवेशे शुद्धिः स्यादुपलेपनम्।"

अजातिसंवेशे-चाण्डालादिशयने।

बौधायनः - अनेकोद्बाह्य दारुशिले भूमिसमे इष्टकाष्ठ सङ्कीर्णीभूताः। सङ्कीर्णीभूतत्वम् परस्परसम्बन्धः।

पराशर - "रथ्याकर्द्दमतोयानि पन्था नावः स्थलानि च।
स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकचितानि च ॥
वापीकूपतड़ागेषु उद्यानोपवनेष च।
द्विसप्तमार्ज्जनङ्कृत्वा परं शुद्धि विधीयते ॥"

याज्ञवल्क्यः - रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मारुतार्क्केण शुद्ध्यन्ति पक्वेष्टकचितानि च ॥

पन्थानश्च विशद्ध्यन्ति सोमसूर्यांशमारुतैः।" अमेध्यलेपाभावपर मिदम्।

"भूशुद्धिर्म्मार्ज्जनात्कालाद्दाहाद् गोक्रमणादपि।
सेकाच्चोल्लेखनाल्लेपाद्गृहं मार्ज्जनलेपनात् ॥"

गृहभूमौ पुनर्लेपनम्-प्रत्यहं मार्ज्जन लेपन बोधनार्थम् ।

ब्राह्मे: - "ग्रामाद्दशशतन्त्यक्त्वा नगराच्च चतुर्गुणम् ।
भूमिः सर्वत्र शुद्धा स्यादत्र लेपो न विद्यते ॥"

दन्तो--हस्तचतुष्टयम् ।

व्यास: -- "शूद्रश्च पतितश्चान्त्यो मृतश्चेद् द्विजमन्दिरे ।
शौचन्तत्र प्रवक्ष्यामि मनुनाऽभिहितं यथा ॥
दशरात्राच्छुचि प्रेतो मासाच्छूद्रो भवेच्छुचि ।
द्वाभ्यान्तु पतिते गेहे अन्त्ये मासचतुष्टयात् ॥
अन्त्ये विवर्ज्जयेद् गेहमित्येवमृषिरब्रवीत् ।
द्विजस्य मरणे वेश्मसंशुद्धयेच्च दिनत्रयात् ॥
दिनैकेन वहिर्भूमिरग्निप्रोक्षणलेपनैः ।"

अन्त्य: प्रथम श्चाण्डाल: । द्वितीयस्तु-यवनादिः । अग्निभ्रामण गोमयोपलेपनोदक प्रोक्षण गोमयोपलेपनानि सर्वतोक्तकालानन्मरङ्कार्याणि । जलशुद्धौ-

मनु: - "आपः शुद्धा भूमिगता वितृष्णा यास्सु गौभवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ।।"

शङ्ख: - "भूमिष्ठमुदकं शुद्धयेच्छुचितोयं शिलागतम् ।"

ब्राह्मे : - "भूमिष्ठमुदकं शुद्धं गन्धवर्ण रसान्वितम् ।
केशास्थि शव विण्मूत्र संयोगैरुज्झितं यदि ॥
येषामभक्ष्यं मांसञ्च तच्छरीरे हतिञ्च यत् ।
वापी कूप तड़ागेषु जलं सर्वञ्च दुष्यति ॥
सकर्दमं कुणपवत्तोभ्य स्तोययपास्य च ।
प्रक्षिपेत्पञ्चगव्यञ्च पवित्रं सर्वशुद्धिमत् ॥
अपास्य कुणपन्तेभ्यो वहुतोयेभ्य एव वा ।

शतं षष्टिञ्च द्वात्रिंशत्तोकुम्भान् समुद्धरेत् ॥
पञ्चगव्यन्ततस्तेषु प्रक्षिपेमन्त्रसंयुतम् ॥"

बृहस्पतिः - मृतपञ्चनखात्कूपा दत्यन्तोपहतात्तथा ।
अपः समुद्धरेत्सर्वाः शेषं शस्त्रेण शोधयेत् ॥
वह्निप्रज्वलनं कृत्वा कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्पश्चान्नच तोयं समुद्धरेत् ॥
जलाशयेष्वथान्येषु स्थावरेषु वसुन्धरे ।
कूपवत्कथिता शुद्धि र्महत्सु च न दूषणम् ॥
अस्थि चर्म विनिर्मुक्ते दूषिते च गवादिभिः ।
उद्धृत्य तज्जलं सर्वं शोधनं परिमार्ज्जनम् ॥
वापी कूप तड़ागेषु दूषितेषु विशोधनम् ।
घटानां शतमुद्धृत्य पञ्चगव्यन्ततः क्षिपेत् ॥
श्वभिः श्वपाक चाण्डालै र्दूषितेषु विशोधनम् ।
उद्धरेदुदकं सर्वंमार्ज्जनं परिशोधनम् ॥"

आपस्तम्बः -"उपानच्छ्लेष्मविण्मूत्रस्त्रीरजो मद्यमेव वा ।
एभिश्च दूषिते कूपे कुम्भानां षष्टिमुद्धरेत् ॥"

पराशरः - "अस्थिचर्मावसिक्तेन श्वमार्ज्जारैश्च दूषितैः ।
दूषितन्तु त्यजेत्तोयं तत्राध स्तात्तशोधनम् ॥
अस्थिचर्मादि पतितं खरवानरशूकरैः ।
उद्धरेदुदकं सर्वं शोधनं परिमार्ज्जनम् ॥
वापी कूप तड़ागेषु दूषितेषु कथञ्चन ।
उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुद्धयति ॥"

मनुः - 'प्रयामरण्यु घटशतञ्चकूपे द्रोण्यां जलं कोशगता स्तथापः ।
ऋतेपि शूद्रात्तदपेयमाहुरापद्गता भूमिगताः पिवेताः ॥"

हारीतः-रात्रावेता वरुणं प्राविशँस्तस्मान्न रात्रौ प्रतिगृह्णीयाद्धाम्नो धाम्न इत्युपविष्टादग्निन्धारयन् गृह्णीयात् ।

यमः— "अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठञ्च नवोदकम् ॥
एकरात्रोषिता यास्तु त्यजेदापः समुद्धृताः।"

शिलागतम् - शिलामयाशयगतम्। अस्थि - अभक्ष्य प्राणिनः। कुणपः - शवः। तेभ्यो - वाप्यादिभ्यः। अप्सु - तोयेभ्यः। शतं तदधिकमानकेखातेषु, सेतौ द्वात्रिंशत् अनादेशे, मन्त्रो - व्याहृतित्रयम्।

पञ्चनखा अभक्ष्याः अत्यन्तोपहतात् - शरीरमलमद्ययुक्तात्। शेषं - कर्द्दमं, शास्त्रेण - कुद्दालादिना। अन्येषु - तड़ागाधिकमानकभिन्नेषु महत्सु-तड़ागाधिकमानेषु सेतुषु कृत्रिमेषु च। परिमार्ज्जनम् - कुद्दालादिनाकर्द्दमाप-नयनम्। वापीति - बहुतरजलवत्परम्।

श्वपाकः कुक्कुरभक्षकः। श्वताप्राप्तः। उद्धरेदित्यल्पजलवत्परम्। कूपे अल्पजले, अवसिक्तेन युक्तेन त्यजेत् - सर्वमुद्धरेत्। खरादिभिर्दूषितमित्यन्वयः। पतितमस्थिचर्माद्युद्धरेदित्यन्वयः। वापीत्यादि बहुजलपरम्। खनिर्मलोत्पत्ति-स्थानम्। सन्दिग्धेषु शवादिसम्बन्धितया। प्रपा - पानीय शालाघटकमुद्ध-रणभाण्डम्। द्रोणी - काष्ठाम्बुवाहिनी। कोशश्चर्मभाण्डम्।

ऋतेपीति - शूद्रान्यस्येत्यर्थः। एतेन शूद्रान्यस्यशू द्रान्यस्वामिकमप्यपेय-मित्युक्तम्। आपद्गतः तोयान्तराप्राप्तिमान भूमिगताः। प्रपाकोशादितो भूमिप्राप्ताः प्राविशन्नापःतस्माद्वरुणदेवभङ्गप्रसङ्गात्।

जलान्तरालाभे त्वाह - धाम्न इति गृह्णीयात्। घटोद्धारं पुष्करिण्यादि शुद्ध्यर्थमन्यम्वा कुर्यात्। नवोदकं वृष्टिप्रभवम् अधरमुत्थितञ्च। वल्या-वशादागतञ्च एकेति विनियोगपूर्वरात्रौ भाण्डस्थिताः।

अथ सूर्यचन्द्रदहनानां तेजसां स्वभावशुद्धेरन्यशोधकत्वेनोक्तत्वात्तदुपेक्ष्य भूजल तेजोविकाराणां शुद्धिमाह—

मनुः— "तैजसानां मणीनाञ्च सर्वस्याश्ममयस्य च।
भस्मनाद्भिर्मृदाचाऽपि शुद्धिरुक्ता मनीषिभिः॥

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यति ।
अब्जमश्ममयञ्चैव राजतञ्चानुपस्कृतम् ॥
अग्नेश्चापाञ्च संयोगाद्धेम रौप्यञ्च निर्वभौ ।
तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तराः ॥
ताम्रायः कांस्य रैत्यानां त्रपुणः शीशकस्य च ।
शौचं यथार्हङ्कर्त्तव्यं क्षाराम्लोदकवारिभिः ॥"

तैजसानां सुवर्णानां काञ्चनं हेमेत्यस्याग्रेऽभिधास्यमानत्वात् । इदमेव सुवर्णानां तैजसत्वेमानमित्यभिहितम्प्रत्यक्षालोकविभूषणे । भस्ममृदोर्विकल्पः तुल्यार्थत्वात् । एवकारेणाग्रे तयो र्व्यवच्छेदः । अब्जं शङ्खशुक्त्यादि अनुपस्कृतं शूद्रभोजनदोषानाक्रान्तम् ।

"सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च ।
त्रिसप्तमार्ज्जनैः शुद्धिर्न्नतु कांसस्यभाजने ॥
ब्राह्मक्षत्र विशाञ्चैव सकृत्सम्मार्ज्जनाच्छुचिः ।
चतुर्थे सत्वरद्भुक्तं चतुर्भिरथ मार्ज्जितम् ॥
अग्नौ निःक्षिप्य गृह्णीयाद्धस्तौ प्रक्षाल्य यत्नतः ।
गोश्रृङ्गेण तु संस्पृष्टम् तत्सूत्रं शुचितामियात् ॥"

इति शङ्ख वचनात् ।

मद्यम् - पेष्टी । सुरात्र - अन्यानान्वेति । पुनर्घटनेन ब्रह्मेतिभुक्तमित्यनुषङ्गः । वेद्यादिशून्यमित्यर्थमन्ये वदन्ति ।

निर्वभौ अबग्निसंयोगोऽसमवायिकारणम् । इतोऽपि सुवर्णस्य तैजसत्वं नरजतस्य । अतएव सुवर्णमग्निदैवतं, रजतं जलप्रधानकशीतचन्द्रदैवतम् । स्वयोन्या हिरण्यस्याग्निना । रजतस्य जलेन, निर्णेको मलक्षयो गुणवत्तरः शुद्धिहेतुः । रैत्यम् - पित्तलपात्रम् । त्रपुः रङ्गम् । यथार्हम् - मलकर्षणसामर्थ्ययोग्यम् । जम्वीरादिरसस्ताम्रस्य, क्षारोदकमयसः - कांस्यस्य । पित्तलरङ्ग शीशकानाम् । चतुर्थेन वर्णेन शूद्रेण शुक्रं भोजनपात्रीकृतम् । चतुर्भिः मृद्भस्मवारिजम्वीरादिरसैः ।

शङ्खः- "ऊष्णोदकेन ताम्रस्य शीशस्य त्रपुणस्तथा ।
क्षारेण शुद्धिः कांस्यस्य लौहस्य च विशेषतः ॥
सिद्धार्थकानां कल्केन दन्तश‍ृङ्गमयस्य च ।
निर्यासानां गुडानाञ्च लवणानान्तथैव च ॥
कुसुम्भकुसुमानाञ्च ऊर्णाकार्पासयोस्तथा ।
प्रोक्षणात्कथिता शुद्धिरित्याह भगवान्यमः ॥"

अम्लरसमुदकपरम् । स्निग्धभाण्डे तूष्णत्वन्तत्रकार्यम् । शीशादित्रयस्य तूदकेन मृत्सहितेन शुद्धिः । उष्णत्वञ्चपूर्ववत् । तथेति पित्तलसमुच्चयः । विशेषतः - स्निग्धस्य तप्तोदकसाहित्यात् । सिद्धार्थकानामित्यादि स्वल्पोपघाते अस्थ्नां शङ्खादीनाम् ।

ब्राह्मे-- "सुवर्णरौप्यशङ्खाश्मशुक्तिरत्नमयानि च ।
प्रक्षेप्तव्यानि तान्यग्नौ यच्च यावत्सहेदपि ॥"

देवलः-- लौहानान्दहनाच्छुद्धिर्भस्मना गोमयेन वा ।
दहनाज्जननाद्वाऽपि रैत्यानामम्भसाऽपि वा ॥
काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि ।
मृण्मयानान्तु पात्राणां दहनाच्छुद्धिरिष्यते ॥"

दहनजनने समुदिते अत्यन्तोपहतानामम्भसैवाल्पोपहतानां मृद्गोमयभस्मनामन्यतमेन जलसहितेनोच्छिष्टानां लौहरैत्यकाष्ठपात्राणाम् शुद्धिकृत् काष्ठानान्तु न दहनन्तथा आश्रयनाशप्रसङ्गात् ।

पैठीनसिः-- शुद्धिस्त्रपुशीशकानां गोमयतुषैरुच्छिष्टस्नेहसंस्पृष्टे क्षारोदकाभ्यामब्जस्य च ।

हारीतः- अद्भिः काञ्चनराजतानां तद्गुणवर्णयोगात् स्नेहवैवर्ण्योपहतानां यवगोधूमचूर्णैर्म्मार्जनम् ।

रोचनाद्भिः प्रक्षालनम् अम्ललवणान्ताम्राणाम् भस्मनाकास्यानां शाणतैलघर्षणैः कार्ष्णायसानां सिकतावघर्षणैः शैलानां शिलावद्धर्षणमार्ज्जनं मणि-

मयानां निर्ल्लेखनैर्द्दारुमयानां पुनःपाकेन मृण्मयानां गोमयविल्वैर्वेणुदलानां गोवालरज्वा सोदकया फलपात्राणां मार्ज्जनकमण्डलूनां यतिपात्राणां क्षारोदकाभ्यां कार्पासशणमयानां पुत्रञ्जीवारिष्टकैः क्षौमदुकूलानां पुत्रञ्जीबोदश्विद्भिश्चीनानां, रीफलश्चेत् सर्षपैः कौशेयानां उदश्विद्वल्मीकमृत्सर्षपैरूर्णानां स्नेहसक्तु कुल्माषोद्वर्त्तनं गुरूणाम् । तस्य साहाजिकोगुणवर्णः नतु वैवर्ण्यम् तस्मात् ।

कमण्डलूनामित्यस्यविवरणं यतिपात्राणामिति । चीनो महाचीनदेशजं पट्टवस्त्रम् उदश्विदर्द्धाम्बुदधि उर्णा - मेषरोमजकम्वलादिः ।

कुल्माषः—स्विन्नमाषः । गुरूणां - नेपालादिकम्वलानाम् ।

कश्यपः—"सिकताभिर्द्दन्तशङ्खशुक्तिमयानां वस्त्रराजतसौवर्णानामद्भिः शौचम् । तृणकाष्ठरज्जुभूर्ज्जानां शाणक्षौमचिररेण वैदलपत्रवल्कलानां चैलवच्छौचमत्यन्तोपहतानां परित्यागः।"

वैदलम् - वंशान्तर्भागनिर्मितंपात्रम् ।

बौधायनः—तैजसानांपात्राणामुच्छिष्टोपहतानां त्रिःसप्तकृत्वः परिमार्ज्जनम् । तद्द्रव्याणि मृद्गोशकृदमश्मानि । मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनःकरणम् । गोमूत्रे वा सप्तरात्रंपरिस्थापनम् महानद्यांम्वा । एवमश्ममयानाञ्चालावुवैदलानां गोरसैः परिमार्ज्जनम्, नलरेणुकुशस्यूतानां गोमयेनाद्भिः प्रक्षालनम् । करणम्-घटनम् ।

शातातपः—"गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषुवापुनः ।
दशभि र्भस्मभिः शुद्धिःश्वकाकोपहतेषु च ॥"

अङ्गिराः—गण्डूषं पादशौचञ्च यः कुर्यात्कांस्यभाजने ।
भूमौ निःक्षिप्य षण्मासान् पुनराकरमादिशेत् ॥"

आकर अग्निप्रक्षेपणम् ।

"शौचं सहस्ररोमाणां वायुपूर्णेन्दुरश्मिभिः ।
रेतंस्पृष्टं शवस्पृष्टं विकिरन्नैव दुष्यति ॥

अश्मनां काचभाण्डानां हैमानामिव शोधनम् ।
निर्लेपं काञ्चनं भाण्डं जलेनैव विशुद्धयति ।।"

स्पृष्टम् - नतु लिप्तम् ।

यमः - द्रव्याणां संहतानाञ्च मृद्भिरद्भिस्तथा मृदा ।
सोमपानान्तु यत्पात्रम् अद्भिस्तच्छुद्धिरिष्यते ।।
धान्यानां प्रोक्षणाच्छुद्धिरद्भिः प्रक्षालनेन वा ।
शाकमूलफलानाञ्च पात्राणामासवस्य च ।।
और्णकार्पासकानाञ्च शुद्धिरद्भिर्मृदा सह ।
दुकूलपट्टकौशेया शुद्धयन्त्यद्भिर्मृदैव ताः ।।"

ब्राह्मे - "अरिष्टैश्च तथारिङ्गुदफलैश्चर्मणामपि ।
वैदलानाञ्च सर्वेषां चर्मवच्छुद्धिरिष्यते ।।
वल्कलानाञ्च सर्वेषामम्बुना शुद्धिरिष्यते ।
तथा चर्मास्थिदारूणां शृङ्गाणाञ्चावलेखनम् ।।
मणिवज्रप्रबालानां मुक्ताशङ्खोपलस्य च ।
सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः ।।
स्याच्छौच सर्वबालानामाविकानाञ्च सर्वशः ।
तथा कार्पासिकानाञ्च भस्मना समुदाहृतम् ।।
अथोपहतस्य वस्त्रस्य यत्प्रक्षालितं भवेत् ।
विरज्यते प्राञ्जलैर्वेश्म पुनः पाकेन मृण्मयम् ।।"

सोमपानां पात्रम् - यज्ञपात्रम् । धान्यानांमहाराशीकृतानामद्भिरि-रितिपचनीयतण्डुलादिस्वल्पधान्यपरम् । आसवस्यच पात्राणामित्यन्वयः । चित्रपट्टवस्त्रं पट्टसूत्रम् - कौशेयम् पीतपट्टवस्त्रादि । शौचम् मलक्षाल-नम् । उत्पवनम् - व्यस्तहस्तानामिकाङ्गुष्ठाभ्यामूद्र्ध्वनयनम् । तक्षण-मत्यन्तोपहतानाम् , मार्ज्जनं रजोपनयनं चमसादिभिन्नानाम् । स्फ्यः खादिर-खड्गः । बहूनाम् द्रोणाधिकानाम् । स्वल्पानाम तत ऊनमानानाम् । कुतपो - नेपालकम्बलः । अरिष्टको हरिठ इति प्रसिद्धः । अंशुपट्टम - नेत्र-नामकंवस्त्रम् । मलीमसे चेदम्

"ऊर्णापट्टं शुकक्षौमं मट्कूरिक चर्मणाम् ।
अल्पाशौचं भवेच्छुद्धिः शोषणंप्रोक्षणादिभिः ॥"

इति देवलवचनात् । रोमबद्धानि रोमनिर्मितानि ।

हारीतः - पयसा दन्तानामवहननिष्पवनैर्व्रीहियवगोधूमानां, दलनपेषनैः शमीधान्यानां कर्षणविमृशनप्रक्षालनैः फलीकृतानां घर्षणप्रक्षालनपर्यग्निकरणैः शाकमूलफलानां भूस्थग्रहणे प्रक्षालने चेक्षुदण्डानां शमीधान्यवद्यज्ञहविषां प्रतपनेन स्नेहानां पुनःपाकेन कृतलवणानां पुष्क शाकादिभिः स्पृष्टानां तृणकाष्ठानामादित्यदर्शनाच्छौचम् ।

दान्तम् - दन्तनिर्मितम्, क्रीतम् - हट्टायाम् । निष्पवनम् - प्रस्फोटनम् । शिम्बिभवं माषादि विमृशनमपद्रव्यापसारणम् । कर्षणं तुषान्तर्भागापनयः । तुण्डुलस्यावहननम् - व्रीह्यादेर्निस्तुषीकरणम् । पर्यग्निकरणम् - उपरिपरितोऽग्नि भ्रामणम् । भूस्थममार्जितानुलिप्तभूमिष्ठम् ।

बौधायनः — असंस्कृतायां भूमौ न्यस्तानां प्रक्षालनं, तृणानाम् अभ्युक्षणामवक्षणंसमिधां महताङ्काष्ठानामुपघाते प्रक्षाल्यावशोषणम् व्रीहीणाम् उपघाते प्रक्षाल्यावशोषणं तण्डुलानामुपमर्द्द एव ।

"आसनं शयनं यानं नावः पन्थास्तृणानि च ।
मारुतार्क्केण शुद्ध्यन्ति पक्वेष्टकचितानि च ॥
वासः शय्यासनं यानं जायापत्यं कमण्डलुः ।
आत्मनः शुचिरेतानि न परेषाङ्कदाचन ॥"

तृणामित्यग्रेप्यन्वेति, मध्यश्रुतम् । उपमर्द्दः कण्डनम् । एवकारेण गृहस्थितानां क्षालनादि व्यवच्छेदः ।कमण्डलुः - जलपात्रम् ।

सुमन्तुः — गोबालरज्वापुष्पफलानामन्यत्र शकुनोच्छिष्टेभ्यस्तेषामदोषः ।

शङ्खः - आकरस्थद्रव्याणि प्रोक्षितानि शुचीन्याकरजानां त्वभ्यवहरणीयानां घृतेनप्लावितानांशुद्धिः । पुनः पचनमेव स्नेहानां कृष्णाजिनानां विल्वैश्च

बालानां मृद्भिरम्भसा । तैजसानां कुणरेतोविण्मूत्रोपहतानामावर्त्तनमूल्लेखनं भस्मना त्रिःसप्तकृत्वःपरिमार्ज्जनम्वा ।

"मद्यै मूत्रपुरीषैर्वा श्लेष्म - पूयाश्रुशोणितैः ।
संस्पृष्टं नैव शुद्धयेत पुनःपाकेन मृण्मयम् ॥
एतैरेव तथा स्पृष्टं ताम्रसौवर्णराजतम् ।
शुद्धयत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा ॥
अलाबुदारुपात्राणां वैदलानान्तथैव च ।
अत्यन्तोपहतानाञ्च परित्यागो विधीयते ॥"

बालानाञ्चामरादीनाम् । कुणपः - शवः आवर्त्तनम् - द्रवीभावः । उल्लेखनम् - तक्षणम् । चिरदुष्टस्यावर्त्तनम् उल्लेखनायोग्यस्य । तद्योग्यस्य तु द्वितीयम्, सद्यो दुष्टस्य तृतीयमिति व्यवस्था । भस्मपदम् - मृद्गोमययो-रप्युपलक्षकम् बौधायनवचनात् ।

आवर्त्तितम् - द्रवीकृतम् । वैदलानाम् — वंशदलभवानाम् । सम्पूर्णोपघाते परित्यागः ।

बृहस्पतिः—"वस्त्रवैदलचर्माणां शुचिः प्रक्षालनं स्मृतम् ।
अतिदुष्टस्य तन्मात्रं त्यजेच्छिन्द्याद्विशुद्धये ॥"

तन्मात्रमुपहतांशमात्रम् ।

देवलः—"दूषितं वर्ज्जितं दुष्टं कश्मलञ्चेति लिङ्गिनाम् ।
चतुर्विधममेध्यञ्च सर्वं व्याख्यास्यते पुनः ॥
अशुच्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
अभक्ष्यभोज्यपेयानि वर्ज्जितानि प्रचक्षते ॥
त्यक्तः पतितचाण्डालौ ग्रामकुक्कुरशूकरौ ।
श्वा च नित्यं विवर्ज्याःस्युः षडेतेऽशुचयः स्मृताः ॥
सव्रणः सूतिकासूयीमत्तोन्मत्तरजस्वलाः ।
मृतबन्धुरशुद्धश्च वर्ज्यान्यष्टौ स्वकालतः ॥

स्वेदाश्रु बिन्दवः फेनो निरस्तं नखलोम च ।
आर्द्र चर्मासृगित्येतद्दुष्टमाहुर्म्मनीषिणः ॥
मानुषास्थि वसाविष्ठारेतो मूत्रान्तराणि च ।
कुणपं पूयमित्येतत्कश्मलं समुदाहृतम् ॥
दूषितं प्रेक्षणेनापि शुद्धिरुक्ताविधानतः ।
दुष्टैर्म्मार्ज्जनसंस्कारैः कश्मलैः सर्वथा भवेत् ॥"

लिङ्गिनामाश्रमिणां भोज्यम् गणकरणसंयोगार्हं त्यक्तो बान्धवादिना दुष्टत्वेन । सूयी - प्रसवकारयित्री । अशुद्धो जननाशौची । निरस्तं स्थान-भ्रष्टम् । प्रोक्षणेनापीति क्षालनसमुच्चयः । दुष्टैः कश्मलैर्दूषिते ।

ब्राह्मे — "पक्वमन्नङ्गवाघ्रातं मक्षिकाकेशदूषितम् ।
छागघ्रातञ्च तत्कृत्वा शोध्यं रत्नाम्बुभिः सह ॥
श्वशूकरखरोष्ट्रैश्च यदालीढञ्च जम्बुकैः ।
अग्रं विहाय तत्पश्चात् संस्पृष्टव्यमथाग्निना ॥
छागाघ्रातं तथा शुद्धं स्याद्धेमजलसंयुतम् ।
भुञ्जीतचापि यच्चान्नं मक्षिकाकेशदूषितम् ॥
रजःपिपीलिकायुक्तं यच्च स्पृष्टमवक्षतैः ।
तदग्रन्तु विहायैव शेषं क्षाराम्बुभिः शुचिः ॥"

यमः— "शुक्तानीह द्विजोऽन्नानि न भुञ्जीत कदाचन ।
प्रक्षालयित्वा निर्दोषाण्यापद्धर्मो यदा भवेत् ॥"

तदा भुञ्जीत इति शेषानुषङ्गौ ।

"मसूरमाषसंयुक्तन्तथा पर्युषितञ्च यत् ।
तत्तु प्रक्षालितङ्कृत्वा भुञ्जीताऽथभिघारितम् ॥
मक्षिकाकेशमन्नेषु पतितं यदि दृश्यते ।
मूषकस्य पुरीषम्वा क्षतं यच्चावधूलितम् ॥
भस्मान्यास्पृश्यचाश्नीयादभ्युक्ष्य सलिलेन च ।"

माषो - राजमाषः। अभक्ष्यसाहचर्यात्। पतितम् - संयुक्तमन्नम् पुरीषमन्ने क्षुतमुपरिकृतछिक्कम्। अवधूनितं मुखश्वानेन वातेन वा अस्पृस्यान्ने संयोज्यम्।

"अवक्षुतङ्कीटपतङ्गकेशैरुदक्यया यत्पतितैश्च दृष्टम्।
अलातभस्माम्बुहिरण्यतोयैः संस्पृष्टमन्नं मनुराह भोज्यम्॥"

मक्षिकाकेशकाद्यूनाः। सूक्ष्माः पिपीलिकाः।

"आमिषामेध्यसेवी च नैते कीटा विपत्तये।
वाक् प्रशस्तानि भुञ्जीत वाग्दुष्टानि विवर्जयेत्॥"

अवक्षुतमुपरिप्रान्तेषु च कृतछिक्कं केशैरित्यत्र संस्पृष्टमित्यग्रिममनुषज्यते। घुणा - काष्ठछेदकजन्तवः। विपत्तये - अशुद्धये।

मनुः— "पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुद्ध्यति॥"

पक्षीभक्ष्यभिन्नः।

याज्ञवल्क्यः—"गोघ्रातेऽन्ने तथा केशे मक्षिकाकीटदूषिते।
मृद्भस्मसलिलन्तत्र प्रक्षेप्तव्यं हि तत्क्षणात्॥"

बौधायनः—त्वक्केशनखादिपुरीषाणि दृष्ट्वा तद्देशपिण्डानुद्धृत्याभ्युक्ष्य भस्मावकीर्याभिधार्य पुनरपि प्रोक्ष्य वाचा प्रशस्तमुपभुञ्जीत। त्वचादीनि- समुदितानि।

शातातपः- "केशकीटगवाघ्रातं वाससोपहतञ्च यत्।
क्लीबादिभिस्तुपतितैः सूतिकोदक्यनास्तिकैः॥
दुष्टं वा स्यात्तदन्नन्तु तस्य निष्कृतिरुच्यते।
अभ्युक्ष्य किञ्चिदुद्धृत्य भुञ्जीताप्यविशङ्कितः॥

भस्मना चाभिसंस्पृश्य संस्पृशेदुदकेन च ।
सुवर्णरजताभ्यां वा भोज्यङ् घ्रातमजेन वा ॥

घृतञ्च पायसं क्षीरं तथैवेक्षुरसो गुडः ।
शूद्रभाण्डगतं तक्रं तथा मधु न दुष्यति ॥"

केशकीटेति मत्वर्थीयाच्प्रत्ययान्तम् । उपहतमवधुनितम् । पायसन्दधि ।

उशनाः—अजाघ्रापणेनान्नाद्यानां स्नेहघृतलवणमधुगुडानां पाकेन ।

सुमन्तुः—केशकीटक्षुतनिष्ठीवतोऽभिहतं श्वभिराघ्रातं प्रोक्षितं च दधि पर्युषितं पुनः सिद्धञ्चाण्डालावेक्षितमभोज्यमन्यत्र हिरण्योदकैः स्पृष्टात् ।

देवलः- "चाण्डालेन शुना वाऽपि दुष्टं हविरयज्ञियम् ।
विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्ज्जयेत् ॥"

अन्यत्रेत्याद्युक्तशेषः ।

शङ्खः-- आकरजानां त्वभ्यवहरणीयानाङ् घृताभिघारितानां शुद्धिः । पुनः पचनमेव स्नेहानां स्नेहवद्रसानां मृद्भिरद्भिर्द्रवाणामुत्प्लवनं शुष्कानामुद्धृतदोषाणां संस्कारः । परिप्लावितदोषाणां ततस्त्यागः । मृद्भिरद्भिर्युक्तानां द्रवाणां परिप्लावितं सर्वतोव्यापि उपहतं न दुष्यति । तस्योपहतमंशमपास्य गायत्र्यभिमन्त्रितसुवर्णोक्तं क्षिपेत् । वस्तस्य दर्शयेदग्नेश्च ।

मनुः-- "देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च यत्स्पृष्टं तदन्नं नैव दुष्यति ॥
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ।
अन्नानां प्रोक्षणाच्छुद्धिर्द्रवाणामभितापनात् ॥
संस्पर्शनाद् भवेच्छुद्धिरपामग्नेर्घृतस्य च ।
छागेन मुखसंस्पृष्टं शुद्धत्वेन विनिर्दिशेत् ॥"

देवद्रोणी-- देवार्थसिद्धमन्नम् ।

यम:-- आममासं घृतं क्षौद्रं स्नेहाश्च फलसम्भवा: ।
म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ता: शुचयो मता: ॥"

नि:क्रान्ता म्लेच्छभाण्डत: ।

शातातप:-- "गोकुले कन्दशालायां तैलयन्त्रेक्षुयन्त्रयो: ।
अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥"

बृहस्पति:-- "तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरे ग्रामदाहे च स्पर्शदोषो न विद्यते ॥
आपद्यपि च कष्टायां रम्भणे पीडने तथा ।
मातापित्रोर्गुरोश्चैव निर्दिशेद् वर्त्तने तथा ॥"

रम्भणे-- प्रीत्यालिङ्गने ।

हारीत:-- "कन्दुपक्वं स्नेहपक्वं पायसन्दधिसक्तव: ।
एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥"

एतानि शूद्रस्वामिकानि ।

अथ मरणाशौचप्रसङ्गेन मरणपूर्वकृत्यवहिर्निस्सारणादिकं तदुत्तरकृत्यपूर्वक्रियाश्चाभिहितास्तत्र चास्थिसञ्चयश्राद्धमुक्तमधुना मरणोत्तरकृत्यप्रसङ्गेनाह्निकप्रकरणोक्तनित्यश्राद्धप्रसङ्गेन च पूर्वक्रियाजिज्ञासापगमादवसरसङ्गत्या च **प्रेतश्राद्धपार्वणादिरूपे मध्यमोत्तरक्रियेऽभिधीयेते**--

तल्लक्षणमाह **आपस्तम्ब:** -- अथ श्राद्धशब्दं कर्म प्रोवाच प्रजानि:श्रेयसार्थम् । तत्र पितरो देवा ब्राह्मणस्त्वाहवनीयार्थे मासि मासि कार्यम् । प्रमीतोद्देश्यको ब्राह्मणस्वीकारणाङ्गकस्त्याग इति लक्षणार्थ: ।

आद्येन दानमन्त्येन पिण्डदानतर्पणादि वारितम् । त्रिविधक्रियात्मकश्राद्धमेव लक्ष्यमिति विश्वेदेवश्राद्धसन्यासकर्तृकश्राद्धसनकादिश्राद्धेषु अव्याप्तिदोष: । अपात्रकश्राद्धमिलितषट्पुरुषोदेश्यकनित्यश्राद्धे त्वव्याप्तिब्राह्मणस्वीकारणाङ्गकयागत्वव्याप्यजातिमत्त्वं विवक्षयानिरस्ता । यद्व

अपात्रकश्राद्ध इव देवादिश्राद्धे प्रमीतदेवताकवृत्तियागत्वव्याप्यजातिमत्व-विवक्षया। इत्थञ्च पितृपदस्य सपितार्थत्वे षट्पुरुषार्थत्वे जनकार्थत्वे वा न प्रेतश्राद्धभ्रातृश्राद्धव्याप्तिः। त्यागश्च प्रधानीभूतो ग्राह्यः। तेन पिण्ड-दानमहङ्करिष्य इति स्वीकारणाङ्गकपिण्डदानव्यावृत्तिः।

गन्धादिदानन्तु न स्वीकारणाङ्गकम्। किन्तु ग्रहणं सुगन्ध इत्यादि स्वी-कारणाङ्गकम्। अथवा जुषस्वेच्छात इति स्वीकारणाविशेषो लक्षणघटक-लक्षणद्वये च तात्पर्यम्। आद्ये च न तर्पणाद्यतिव्याप्तिः। पितृपदेन सोमाय पितृमते स्वाहा इत्यत्रोद्देश्यः सोम एव हि विवक्षितः। तथा च तादृशत्यागा-ङ्गकवृत्तिनिरुक्तजातिमत्वविवक्षयाव्याप्तिनिरासः तर्पणवारणञ्च। पिण्ड-दानञ्च श्राद्धाङ्गभूतम्। पिण्डपितृयज्ञश्च तीर्थे शुद्धपिण्डदानञ्च नाग्नौकर-णाङ्गमित्यदोषः।

केचित्तु देवताभ्य जपोत्तराङ्गकत्वं रक्षोघ्नीजपाङ्गकत्वं पात्रालम्भाङ्ग-कत्वं वा लक्षणमित्याहुः। श्राद्धेति शब्दो वाचको यस्य शक्यतावच्छेदिका जातिः सर्वश्राद्धसाधारणी न तूक्तोपाधिर्गौरवात्। श्राद्धे ब्राह्मणं पृच्छे-दित्यत्र कश्चितोपाधेरपरिचयेन शाब्दबोधानुपपत्तेश्च। साधारणत्वञ्च जातेः, श्राद्धस्य पूजितो देश इत्यादि साधारणप्रयोगात्।

आहवनीयप्रयोगार्थे प्रतिपत्तिरूपे। श्राद्धञ्च यागस्वरूपम्, देवतो-देश्यकत्यागत्वात्। देवतात्वन्तु सम्प्रदानभिन्नत्वम। तेन दानवारणम्, सम्प्र-दानत्वञ्च उद्देश्यस्यानुमन्त्रित्वम्। प्रधानत्वञ्चान्नत्यागो नतु पिण्डदानम्, विकृतौ तस्य निषेधात्।

"श्राद्धङ्कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः।
उष्णमन्नं द्विजातिभ्यः श्रद्धया प्रतिपादयेत्॥"

इति वचनेऽन्नत्यागस्य श्राद्धपदेनाभिधानाच्चेति दिक्। अथ पितृभ्यो दद्यादिति साहित्यार्थकन्त्वपवादैकशेषात्पार्वणे मिलितानां षट्पुरुषाणां देव-तात्वं प्रतीच्या वर्णयन्ति। तदयुक्तम्। गर्गाभोज्यन्तामितिवत् ज्ञानक्रियाया-मेकस्यामन्वयेन साहित्योपपत्तेः। साहित्यस्य द्वन्द्वाबोध्यत्वात्, एकशेषस्य

द्वन्द्वानपवादकत्वात् । पित्रे पितामहाय प्रपितामहायेत्यादि विष्णुस्मृत्या असावेतत्ते यजमानस्य पित्रे पितामहाय प्रपितामहायेत्यादिश्रुत्या पितरिदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमित्यादि वैजवापगृह्येन पितरिदं तेर्घ्यं ये चात्रेत्यादि असावेष तेऽर्घ इति पारस्करेण विरोधाच्च । अतएव पत्न्याऽपि साहित्येनोद्देश्यत्वमपास्तम् । अथ सहत्वेन पत्न्या उद्देश्यत्वं "स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते स्वधामयमिति" वचनात् ।

"न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥"

इति कात्यायनवचने पृथक्पदस्वारस्येन स्वभर्तृपिण्डेत्यत्र शक्त्या द्वन्द्वोभयीयत्वानुरोधेन चापृथग्दानागमात्, अधिकस्यानुप्रवेशेऽपि न श्रुत्यादिविरोध इतिवत् । नैवम् वाक्ययोरसपिण्डनपरत्वात् योषित्पदवैयर्थ्यमपेक्ष्याव्ययपृथक्पदवैयर्थ्यस्योचितत्वात् । सम्बन्ध्याकाङ्क्षापूरणक्षमत्वेन षष्ठीसमासौचित्यात् । अधिकप्रवेशे श्रुतिनैरपेक्ष्यबाधप्रसङ्गाच्च ।

"अन्वष्टकासु वृद्धौ च गयायाञ्च क्षयेऽहनि ।
मातुः श्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह ॥"

इति वचनमपि विधवासपिण्डनपरम् । स्यादेतत्--

"अर्घेऽक्षय्योदके चैव पिण्डदानेऽवने जने ।
तन्त्रस्य विनिवृत्तिः स्यात्स्वधावाचन एव च ॥"

इति विशिष्टवचनादन्नोत्सर्गगन्धादिदानाद्योर्मिलितोद्देश्यकत्वमिति । अत्र ब्रूमश्चकाराभ्यामनुक्तयोस्तयोः समुच्चयः । तन्त्रता चावाहनतिलविकरणादौ तत्त्यागः । सर्वत्र प्रत्येकमेवेति विस्तरोक्तो भावदीपिकायाम् । अत्र मिश्राः-शाब्दबोधानुरोधेनास्मत्पितरित्यास्त्येव प्रयोज्यम्, किञ्च आयन्तुनः पितर इत्यत्र पितॄन् लोकान् प्रीणाहीति मन्त्रे चास्मत्पदश्रवणात्त्यागवाक्येऽपि तत्प्रयोगः, अर्थाध्याहारपक्षस्यानुक्तत्वादिति ।

तदयुक्तम् - शाब्दबोधस्य मानाभावेनानपेक्षितत्वात्, किञ्च शाब्दबोधः स्वस्यानपेक्षित एव स्वोक्तशब्दस्याबोधकत्वे त्वसम्भवि च पात्रपुरोहित-सभ्यास्त्वनियताः पितृ्णां स्वर्गादिस्थानां श्रवणमसम्भवि। अपि च प्रयोग-बोधकश्रुत्यादिनाऽस्मत्पदे नैरपेक्ष्यं बोधितम्। मन्त्रे त्वेतपितर इत्यादौ बहुत्वास्मत्पदे नैरपेक्ष्यमेव श्रूयत इदि दिक्।

## अथ श्राद्धभेदाः

विश्वामित्रः - "नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्।
पार्वणञ्चेति विज्ञेयं गोष्ठ्यां शुध्यर्थमष्टमम्॥
कर्माङ्गन्नवमं प्रोक्तं दशमं दैविकं स्मृतम्।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम्॥"

नित्यम्-प्रात्याह्निकम्। नैमित्तिकमेकोदिष्टम्। काम्यम् - पारलौकिकेष्टजनकं गयाश्राद्धादिः। वृद्धिः पुत्रजन्मोपनयनादिः। निमित्तं पार्वणमावश्यकं षट्पुरुषश्राद्धम् गोष्ठ्यां पात्रब्राह्मणसमुदाये, शुध्यर्थं कृच्छ्रारम्भसमाप्त्योः, कर्माङ्गम् गर्भाधानाद्यङ्गम्। दैविकम्-विश्वेदेवश्राद्धम्।

"तेषामारक्षभूतन्तु पूर्वन्दैवन्नियोजयेत्।
रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम्॥"

इति बोधितम्। नैमित्तिकं प्रधानम्। अङ्गत्वे कर्माङ्गमध्यनिवेशप्रसङ्गात्। यात्रासु तीर्थगमनस्यादावन्ते च। तच्च षट्पुरुषोद्देश्यत्वं प्रकृतित्वेन पार्वणस्य प्रथमोपस्थितत्वात्। पुष्ट्यर्थं लौकिकेष्टजनकम्।

## अथ श्राद्धदेशाः

गयागङ्गासरस्वतीत्यादिना शुचिदेशं विविक्तमित्यादिना च श्राद्धसामान्यदेशाकाङ्क्षायामभिहिताः पुराणादौ। नच ते देशविशिष्टश्राद्धान्तरञ्च विधायकाः। आकाङ्क्षाशान्त्यनापत्तेः श्राद्धान्तरस्याचारविरुद्धत्वात्। तत्तत्तीर्थानि तत्तत्प्राप्तिनिमित्तकश्राद्धे देशाः।

## अथ श्राद्धकाला:

याज्ञवल्क्यः—"अमावस्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः ॥
व्यतीपातो गजच्छाया ग्रहणञ्चन्द्रसूर्ययोः ।
श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥"

अमावास्यापदेन साग्नेश्चन्द्रक्षयोऽपि काल उक्तः । अष्टकापदेन चान्वष्टकाप्युक्ताः । वृद्धिः पुत्रजन्मतत्संस्कारकन्याविवाहयज्ञतीर्थप्राप्तियात्राद्या अभिहिताः । सूर्यसङ्क्रमः षडशीतिविष्णुपदीरूपः । व्यतीपातपदं योगविशेषार्थकम् ।

गजच्छायापदेन तद्घटकमघात्रयोदश्योर्मिलितयोः प्रत्येकस्य च ग्रहणम् ।

कृष्णपक्षपदेनाश्विनकृष्णचतुर्द्दशीकार्त्तिकामावास्ययोरपि सङ्ग्रहः । रुचिः श्राद्धकर्तृ विद्वत्समुदायप्राप्त्यभिलाषः ।

विष्णुः—अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वङ्कृष्णा त्रयोदशी व्रीहियवपाकौ शरदि वसन्ते च ।

"एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥"

कात्यायनः—आग्रहायण्यूर्ध्वन्तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः क्रमेणापूपमांसशाकैः । अपूपादीनां गुणत्वेनोपादानम् । अष्टकाकर्मणि गोभिलेन समुच्चयबोधनात् । मांसं छागस्य यदि वाऽल्पतमसंभावः स्यादपि पशुनैव कुर्वीतेति गोभिलात् । छागोऽनादेशे पशुरिति गृह्यान्तरात् । तदशक्तौ—

गोभिलः - अपि वा स्थाली पाकङ्कुर्वीत ।

परिशिष्टे --"स्थालीपाकं पशुस्थाने कुर्याद्यद्यानुकल्पिकम् ।
स्नपायेत्तं सवत्सायास्तरुण्या गोः पयस्यथ ॥"

ब्राह्मे --"ऐन्द्र्यान्तु प्रथमायाम्वै शाकैः सन्तर्पयेत्पितॄन् ।

प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत् ॥
वैश्वदेव्यां तृतीयायामपूपैस्तु यथाक्रमम् ।"

इत्युक्तस्तच्छाखान्तरपरम् ।

माध्यन्दिनीयानां पारस्करोक्तत्वाद् गोभिलीयानां स्वगृह्यतुल्यवायुपुराणोक्तत्वात्प्रागुक्तक्रमः ।

**वायुपुराणे**:--"या चाप्यन्या चतुर्थी स्यात्तान्तु कुर्याद्विशेषतः ।
आसु श्राद्धन्द्विजः कुर्यात्सर्वस्वेनापि नित्यशः ॥"

**ब्राह्मे**।--"वर्षासु मेध्यशाकैश्च चतुर्थ्यामिव सर्वदा ।
श्राद्धन्तु प्रोष्ठपद्यान्वै दत्वा ऋतुफलं लभेत ॥"

सा चापरपक्षीया । प्रौष्ठपद्यामतीतायामष्टका त्वं भविष्यसीति वरदानस्मरणात् । वर्षास्विति - ऋतुवत्सरपक्षे । अन्वष्टकाश्राद्धञ्चाष्टकोत्तरदिने तु तत्र नियमात, नियमः स्वोन्वष्टकमिति विध्युक्तेः । साग्नेरेव च तत्राधिकारः । अन्वष्टकास्वष्टकावद्वह्नौ हुत्वा दद्याद्वेवपूर्वं मात्रे पितामह्यै प्रपितामह्यै च । पूर्ववद्ब्राह्मणान् भोजयित्वेति कात्यायनवचनात् वैकृतिविशेषोपदेशेन होमाधारान्तरव्यवच्छेदात् ।

"न पितृयज्ञियो होमो लौकिकाग्नौ विधीयत" इति मनुना निषेधात् । दर्शम्बिना दक्षिणाग्नेरनुद्धरणात् प्रणीताग्नावेव होमः । प्रणीताग्निः पाकार्थमुद्धत आहवनीयः ।

**स्मार्त्तश्च** – अन्वष्टकास्विति स्वोक्तत्रयपरामर्शादाश्विनाष्टकायां वह्निभिन्नेऽपि होमः । अतएवानग्नयोऽपि पाश्चात्यदाक्षिणात्यास्तस्यामन्वष्टकायां श्राद्धमाचरन्ति ।

इदं पुनरवधेयम्-शक्त्यभावे प्रधानत्वेनाप्यपूपादय उपादेयाः । "शाकेनापि नापरपक्षमतिक्रामेदित्यनेन गुणस्यापि प्रधानत्वावगमात् । कलौ पलपैतृकनिषेधस्तूपस्थितगोमांसविषयक इति । माघी पूर्णिमा तु मघायुक्ता तथा त्रयोदशी, रूढेर्बलवत्वात्

"व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव।
न तावाद्यौ महाराज विना श्राद्धङ्कथञ्चन॥
पौर्णमासी तथा माघी श्रावणी च नरोत्तम।
प्रौष्ठपद्यामतीतायान्तथा कृष्णा त्रयोदशी॥
एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः।"

इति विष्णुधर्मोत्तरसम्वादाच्च। आद्यौ भक्षणीयौ शालिश्यामाकावपि श्राद्धम्विनाऽकर्मण्यावभक्ष्यौ च, वक्ष्यमाणवराहपुराणादेः।

वशिष्ठः—श्रावण्याग्रहायण्योरष्टकान्वष्टकासु पितृभ्यो दद्यात्।

"पिता पितामहश्चैव तथैव प्रपितामहः।
उपासते सुतं जातं शकुन्ता इव पक्षिणः॥
मधुमांसैश्च शाकैश्च पयसा पायसेन च।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च॥"

अष्टकासाहचर्यान्नित्यमिव शरदीत्यादिप्रशस्तकालकथनम्।

"श्यामाकैर्व्रीहिभिश्चैव पितृणां सार्वकालिकम्।
कुर्यादाश्रयणञ्यस्तु स शीघ्रं फलमाप्नुयात्॥"

इति सार्वकालिकफलयोर्बोधनात्।

कात्यायनः— "नवोदके नवान्ने च गृहप्रच्छादने तथा।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च॥
तस्माद्द्यात्सदा युक्तो विद्वत्सु ब्राह्मणेषु च।"

नवोदके—आर्द्रास्थरवौ। वर्षाकाले तथार्द्रादिनक्षत्रगणनम् इति रुद्रयामलवचनात्। नवान्ने शरद्वसन्तहेमन्तेषु। बलि तु वर्षासु मघासु आश्विनापरपक्षीयासु।

"भौजङ्गीन्तिथिमासाद्य यावच्चन्द्राकसङ्गमम्।
तत्रापि महती पूजा कर्त्तव्या पितृदैवते॥

ऋक्षे पिण्डप्रदानन्तु ज्येष्ठपुत्री विवर्जयेत् ॥"

इत्याश्विनप्रक्रमे देवीपुराणवचनात् । पितृदैवते पूजा पितॄणाम्, तत्र च पिण्डप्रदानं वर्ज्जयेदित्यन्वयः । मघाबहुत्वं वर्षभेदात् । विद्वत्सु पात्रेषु प्राप्तेषु । मघायां नवोदकाश्विनकृष्णत्रयोदश्योः श्राद्धे पायसं प्रशस्तम् । अशक्तावन्यदपि । तदुक्तम् –

ब्राह्मे — "आश्वयुक्तान्तु कृष्णायां त्रयोदश्यां मघासु च ।
प्रावृड्ती यमः प्रेतान् पितॄँश्चैव यमालयात् ॥
विसर्ज्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ।
क्षुधार्त्ता कीर्त्तयन्तश्च दुष्कृतञ्च स्वयङ्कृतम् ॥
काङ्क्षन्तः पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तान् सूत्रविधिना तर्पयेत्पायसेन तु ॥
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ।
ग्रासमात्रं परगृहाद्व्यक्तं यः प्राप्नुयान्नरः ॥
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम् ।
यो वा सम्बर्द्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ॥
श्राद्धन्तेनापि कत्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥
नास्मात्परतरः कालः श्राद्धेष्वन्यत्र विद्यते ।
यत्र साक्षात्तु पितरो गृह्णन्त्यमृतमक्षयम् ॥
योऽसौ मघात्रयोदश्योः कुञ्जरच्छायसङ्ज्ञकः ।
भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते ॥"

त्रयोदश्यां मघासु चेति मिलितं निमित्तमुक्तम् । अग्रे त्रयोदश्यामित्यादिना प्रत्येकं निमित्तम् । वर्षास्विति - नवोदकपरम् ।

शङ्खः - "प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च ॥"

विष्णुः-- "अपि जायेत सोस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः ॥
मधुत्कटेन यः श्राद्धं पायसेन समाचरेत् ।"

मनुः-- "अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् ।
मघासु सर्पिषा युक्तं पायसं दक्षिणायने ॥
अजेन सर्वलोहेन मघास्वेव यतव्रतः ।
हस्तिच्छायासु विधिवत्कर्त्तव्यं जनबीजितम् ॥"

सर्वलोहेन - सर्वाङ्गलोहेन । मघास्वेवेति - केवलमघाऽभिहिता । कर्णेत्यादि प्राक्छाय इत्युक्तं देशस्तुतिः । योग इति प्रात्यहिकमघानक्षत्रयोगस्यातिप्रसक्तत्वादुक्तम् । मघायां संस्थ इति, अत्रापि पायसमशक्तावन्यदपि द्रव्यम्, उपक्रमेऽभिधानात् ।

"सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः ।
छायायां कुञ्जरस्या भुक्त्वा तु नरकं व्रजेत् ।
प्रमादाद्ब्राह्मणो भुक्त्वा तत्र चान्द्रायणञ्चरेत् ।
आहूताः पितरस्सर्वे तीर्थे श्राद्धाभिकांक्षिणः ॥
तस्मात्तीर्थे प्रकर्त्तव्यमर्घासनविवर्जितम् ॥"

इति पद्मपुराणोक्तत्वात् । इत्यभिदधता भोजननिषेधेऽपि पाकस्य तेनानिषेधात् । अत्रापि मघानिमित्तकत्वात्पिण्डनिषेधः । ननु पार्वणैकोद्दिष्टादौ । पिण्डबाधकबहुवाक्यबाधापत्योपपदविभक्तेरभ्युपगमात् । यथार्घावाहनवर्ज्जितमिति तीर्थश्राद्धे ।

अत्रेयं व्यवस्था— आरब्धपक्षकश्राद्धेन त्रयोदशीमघयोर्मिलितयोः प्रत्येकयोर्गजच्छायायाश्च श्राद्धं तत्र प्रसङ्गाच्छिध्यति । पूर्वापराह्णे त्रयोदशीयुक्तमघाश्राद्धे कृतेऽपराह्णगजच्छायालाभे पुनः श्राद्धङ्कार्यम् । पूर्वदिने गजच्छायाश्राद्धे कृते परदिन त्रयोदशीलाभे पक्षपुरस्कारेण श्राद्धङ्कार्यमेव । दिने दिन इति स्मरणात् । पक्षश्राद्धे त्रयोदशीश्राद्धे च मघासत्वेऽपि ज्येष्ठविद्यमान-

पुत्रवान् पिण्डन्दद्यादेव, अन्यथाङ्गबाधप्रसङ्गादिति ।

नवोदकनवान्नादौ सावकाशश्राद्धे—

ज्योतिषे— नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
श्राद्धमेषु न कर्त्तव्यं पुत्रदारधनक्षयात् ॥
नवान्नं नैव नन्दायां न च सुप्ते जनार्द्दने ।
न कृष्णपक्षे धनुषि तुलायां नैव कारयेत् ॥"

कामधेनौ – "कृष्णपक्षे नवान्नन्तु न कुर्यान्मानवो यतः ।
पितरस्तत्र गृह्णन्ति नवान्नामिषमृद्धिनः ॥"

भोजराजनिबन्धे – "पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः ।
भवेज्जन्मान्तरे रोगी पितृणां नोपतिष्ठते ॥"

वाराहे– "अकृताग्रयणञ्चैव धान्यजातं द्विजोत्तम ।
राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत् ॥
वृश्चिके पूर्वभागे तु नवान्नं शस्यते बुधैः ।
उत्तरे क्रियमाणन्तु धनुष्येव कृतम्भवेत् ॥
धनुषि यत्कृतं श्राद्धं मृगनेत्रासु रात्रिषु ।
पितरस्तत्र गृह्णन्ति नवान्नामिषमृद्धिनः ॥

ज्योतिस्सारसमुच्चये--

"वृश्चिकस्थे रवौ त्यक्त्वा वासराणि त्रयोदश ।
नवान्नविहितं श्राद्धं धनुष्येव कृतम्भवेत् ॥"

हरिहरपद्धतौ-- "श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः ।
प्राग्यष्टुन्युज्यतेऽवश्यं नन्वत्राश्रयणात्ययः ॥
दक्षिणायनकालेज्या पश्चिज्यायोत्तरायणे ।
अन्योन्यकालतः पूर्वं यष्टुन्युक्ते उभे अपि ॥
एवमागामिकालीय - मुख्यकालादधस्तनः ।
स्वकालादुत्तरो गौणः कालः स्यात्पूर्वकर्मणः ॥

यद्वाऽगामिक्रिया मुख्या कालस्याप्यन्तरालवत् ।
गौणकालत्वमिच्छन्ति केचित्प्राक्तनकर्मणि ॥"

त्रिजन्मनि - जन्मदशमोनविंशनक्षत्रेषु । चैत्रे कृष्णपक्ष इति न विशिष्टनिषेधविषयः । नवाऽश्विनकृष्णपक्ष इत्यर्थः । नवा धनुषि कृष्ण इति ज्योतिर्वचनेन नान्वयः । कामधेनुवचने शुद्धकृष्णनिषेधात् । अर्थत्रये विनिगमकाभावात् , शिष्टाचारविरोधाच्च ।

चैत्रस्तु सौरो निषिद्धः , पौषवत् कार्त्तिकवच्च । नतु मुख्यत्वाच्छुक्लादि तन्मुख्यत्वस्य वर्षकृत्यप्रकरणे निरस्तत्वात् ।

अतएव मलमासे वैशाखे यवपाकश्राद्धं लिखितं रुद्रधरोपाध्यायैः । तत्तु चिन्त्यमन्यदाऽपि कर्त्तव्यत्वेन सावकाशतया मासदोषादित्यन्यदेतत् । कृष्णपक्षनिषेधश्च पञ्चम्यनन्तरमेव ।

शुक्लपक्षो विशेषेण कृष्णेप्यापञ्चमं दिनमिति प्रासादलिङ्गसंस्कारप्रकरणेऽग्निपुराणवचनेन पुत्रतड़ागान्नसंस्कारकेषु यज्ञश्राद्धनामकर्म्मादिषु न्यायसाम्यतस्तथावगतेः । अतएव तडागसंस्कारपद्धतौ कृष्णपञ्चम्यन्तः कालो लिखितः ।

श्यामाकैर्व्रीहिभिश्चैव पितृणामिति वाक्ये श्यामाकैर्व्रीहिभिरित्यादि हरिहरवाक्ये च स्मरणादाग्रहायणपदं श्राद्धपरमन्त्ये तुष्णिपरमपि । अणवः - अकटेति प्रसिद्धा ।

पूर्वभागे त्रयोदशांशमध्ये शस्यते । मृगो - मृगशिरोनक्षत्रम् । नेताप्रवर्त्तयिता प्रथमक्षणसम्बन्धी । यासां तद्रात्र्यवच्छिन्नाहस्सु विंशत्यंशपर्यन्तः श्राद्धयोग्यः । श्राद्धयोग्यवेलायां हैमन्तिकसंस्कारकश्राद्धमाचरणीयम् ।

यदि त्रयोदशांशाः कृष्णपक्षाशौचादिना दूषिता अन्नालाभासामर्थ्यादिना वाऽतिक्रान्ताः । यथा न पर्वत इति निषेधानन्तरं न पर्वतमस्तक इति निषेधादशक्तौ पर्वते मूत्रादित्यागाचारः । आगामीत्यादि - आगामिक्रियाचरणम् ।

प्राक्तनक्रियामुख्यकालश्च तदन्तरालवत् । तन्मध्यकाल इत्यर्थः। एवञ्चा-
गामिक्रियापूर्वस्तन्मुख्यपूर्वकालश्च गौण इति सिद्धम् ।

अवीरायाः पार्वणकर्तृदेवरादिरहिताया अन्नसंस्काराऽभिनवबद्र्धमान-
निबन्धस्मृतौ-- "देवताभ्यो द्विजायाथ नवान्नं प्राशयेन्नरः" । पितुरकृत-
नवान्नश्राद्धस्य मृतस्य श्राद्धे पुत्रेण क्रियमाणेऽसामर्थ्ये न श्राद्धाकरणे चायं
प्रकारः। अतएवाग्नये दत्वा ब्राह्मणं भोजयित्वा स्त्रीबाला नवान्नं भुञ्जते ।

शत्रुघ्नोपाध्यायास्तु शस्यते बुधैरित्यनन्तरमन्यत्र कुत्रचिन्माघे ।
शुक्ले समाचरेदिति कृत्यकौमुदीलिखितवचनान्माघे । अन्यत्र फाल्गुने यवपाक-
श्राद्धपूर्वं वैशाखेऽपि श्रादधम् क्वचित्फाल्गुनाकरणमित्याहुः। लिखन्तिस्म
च प्राक्तनकर्मणीत्यनन्तरम् ।

"एवमन्यत्र विज्ञेयं नवान्नेऽपि विपश्चितेति" हरिशयननिषेधस्तु व्रीहि-
पाकश्राद्धभिन्न । सौरश्चाश्विनस्त य कालश्च तु नानिषेधेनान्यत्र कन्या-
प्राशस्त्येन च तथावगमात् ।

एवञ्च भाद्रशुक्ले कार्तिकशुक्ले चैत्रशुक्ले च शारद हैमन्तिक यवानां
संस्कारकालश्राद्धाणि कार्याणीति सिद्धम् । अमावास्या श्राद्धादिकन्तु न
प्रतिपदादौ कार्यम्। तत्र गौणकालस्मरणात् । ब्र वशालिश्यामाकानां
संस्कारकश्राद्धमन्नदानञ्चेति श्राद्धीयद्रव्यनिषेधप्रकरणे शाल्यादिना नवेनेति
व्यक्तं निबन्धेषु !

"अदत्वा यो नवान्नानि ममकर्मपरायणाः ।
भुङ्क्ते भुवि परान्नानि परदत्तानि कानिचित् ।।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च।"

इति वराहपुराणेऽपराधगणनञ्च। व्रीहिश्राद्धन्तु नवव्रीहिभिरेव कार्यम्।
क्षेत्रवता तु निजक्षेत्रोदभवैरेव तैः।

"शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् ।

गच्छेत्क्षेत्री विधानेन गीतवाद्यपुरस्सरः ॥
तेन देवान् पितृँश्चैव तर्पयेदर्च्चयेत्तथा ।"

इति शरदुपक्रमे ब्रह्मपुराणात् । क्षेत्रीत्यभिधानादन्यस्यान्यत आहृतेन नवव्रीहिणा तत्पदप्रतिपाद्येन श्राद्धादिः । अतएव नवव्रीह्यलाभे व्रीहिपाक- श्राद्धं नाचरन्ति शिष्टाः । तद्दिनैकभुक्तादौ न भक्षयन्ति नवा शारदान्नेन पूजादिकमाचरन्ति । "श्यामाको बलिनः स्मृत" इति वचनाद्वा न प्रशस्तस्यैव तच्छ्राद्धेऽधिकारः ।

ग्रीष्मजातकङ्कुमुद्गादौ गृहस्थस्य श्यामाकोऽपि । नीवारादौ च सर्वेषां श्राद्धम्विनाऽपि भक्ष्यत्वम् श्राद्धाद्यर्हत्वञ्चेति मन्तव्यम् । हैमन्तिकान्नञ्च पूजाभोजनश्राद्धभिन्ने कर्मणि अकृताग्रयणमपि विनियोज्यम् । त्रिष्वेव निन्दा- श्रवणात् ।

**अथ कृष्णपक्षः कात्यायनः**—श्रद्धान्वितः श्राद्धङ्कुर्वीत शाकेनापि । नापरपक्षमति- क्रामेन्मासिमासि चोशनमिति श्रुतेः । ऊर्ध्वञ्चतुर्थ्या यदहर्वा सम्पद्येत ।

**गौतमः** - अथ श्राद्धममावास्यायां पितृभ्यो दद्यात् । पञ्चमीप्रभृति वाऽप- रपक्षस्य यथाश्राद्धं सर्वस्मिन्वा द्रव्यदेशब्राह्मणसन्निधौ वा कालनियमः शक्तितः ।

"कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥"

ब्राह्मे – "पयोमूलफलैः शाकैः कृष्णपक्षे तु सर्वदा ।
अश्वयुक् कृष्णपक्षे तु श्राद्धन्देयन्दिनेदिने ॥
त्रिभागहीनं पक्षम्वा त्रिभागन्त्वर्धमेव वा ।
नाश्नन्ति पितरश्चेति कृत्वा हृत्कमले तु यः ॥
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ।
यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ॥
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरन्तथा ।
शून्यं प्रेतपुरन्तावद्यावद् वृश्चिकदर्शनम् ॥

प्रायोनशनशास्त्राग्निविषोद्बन्धनिनान्तथा ।
चतुर्द्दश्यान्तु कर्त्तव्यन्तृप्त्यर्थमिति निश्चयः ॥"

विष्णुधर्मोत्तरे—"प्रौष्ठपद्याः परं पक्षं तत्रापि च विशेषतः ।
पञ्चम्यूद्र्ध्वञ्च तत्रापि दशम्यूद्र्ध्वन्ततोप्यति ॥"

ब्रह्माण्डे— "कन्याङ्गते सवितरि यान्यहानि तु षोडश ।
ऋतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥
राजसूयाश्वमेधाभ्यां यदीच्छेत्सदृशं फलम् ।
अप्यम्बुमूलशाकाद्यैः पितॄन् कन्यागतेऽर्चयेत् ॥"

जातुकर्ण्यः —आषाढीमवधीङ्कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
परपक्षः स विज्ञेयः कन्याङ्गच्छतु वा नवा ॥

जावालः— आगते तु रवौ कन्यां श्राद्धङ्कुर्वीत यत्नतः ।
येयं दीपान्विता राजन् ख्याता पञ्चदशीभुवि ॥
तस्यान्दद्यान्नचेद्दत्तं पितृणान्तु महालये ।"

सूर्यसिदधान्ते- "तुलादिषडशीत्यह्नां षडशीति मुखन्दिनम् ।
तच्चतुष्टयमेव स्याद द्विस्वभावेषु राशिषु ॥
षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य तु ।
मिथुनाष्टादशे भागे कन्यायाश्च चतुर्द्दशे ॥
अत ऊर्ध्वन्तु कन्याया यान्यहानि तु षोडश ।
ऋतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥"

मरीचिः-- "विषशस्त्रश्वापदाहि - तिर्यग्ब्राह्मणघातिषु ।
चतुर्द्दश्यां भवेत्पूजा अन्येषान्तु विगर्हिता ॥
चतुर्दश्यान्तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
तदेकोद्दिष्टविधिना कर्त्तव्यं शस्त्रघातिनाम् ॥"

देवीपुराणे--"आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् ।
चतुर्द्दश्यां भवेत्पूजाऽमावास्यायान्तु कामिकी ॥"

वायुपुराणे- "युवानस्तु गृहे यस्य मृतास्तेषां तु दापयेत् ।
शस्त्रेण वा हता ये वै तेषान्दद्याच्चतुर्दशीम् ॥"

पल्लवे- "पक्षिदंशमृता ये वै दंष्ट्रि शृङ्गिनखैर्हताः ।
पतनाशनप्रायै - रुद्बन्धाशनिबन्द्धनैः ॥
मृत जलप्रवेशेन ते वै शस्त्रहताः स्मृताः ।"

राजमार्त्तण्डे—"कन्याङ्गते सवितरि दिनानि दश पञ्च च ।
पार्वणेन विधानेन तत्र श्राद्धं प्रदीयते ॥"

नागरखण्डे—"आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
मृताऽहनि पुनर्यो वै श्राद्धन्दास्यति मानवः ॥
तस्य सम्वत्सरं यावत् प्रीताःस्युः पितरोध्रुवम् ।"

स्मृतिः– "तर्पणीयाश्चतुर्द्दश्यां लुप्तपिण्डोदकक्रियाः" । ऊर्द्ध्वमिति-तत्रासम्पत्तिनिश्चये प्रतिपदादिचतुष्टये यदहः सम्पद्यते तस्मिन्नहनि तिथौ । तेनामावास्यायां राजनियोगादिनाऽसम्पत्तिनि दशम्याद्यन्यतमतिथौ । तत्रा-सम्पत्तिनिश्चये तु पञ्चम्याद्यन्यतमतिथौ सकृत्करणमेकादशसु परपक्षेषु आश्विनापरपक्षाभिप्रायक सर्वस्मिन्वेति ।

अतएव कृष्णपक्षान्तरेणासकृत्कुर्वन्ति शिष्टाः । द्रव्येत्यादिना द्रव्य-ब्राह्मणसम्पत्तिरित्याद्युक्तकालकथनं शक्तितः चरमाशक्तौ प्रथमतिथेः कालत्वं कथितरीत्या । आश्विनापरपक्षे तु सर्वादिने यद्यशक्तिस्तदा पञ्च-म्यादौ, तदशक्तावष्टम्यादौ, तत्राप्यशक्तौ दशम्यादाविति ।

यथाश्राद्धमित्येतद्नेन विवृतम् । दशम्याद्यहः स्वकृष्णपक्षान्तरे दशम्या-द्यन्यतमतिथौ सकृत्करणमिति मनोरथः । दिन इति चतुर्यामपरम् । नतु तिथिपरम्, लक्षणापत्तेः ।

"तिथिनैकेन दिवसश्चान्द्रे मासे प्रकीर्त्तित" इति वचनेन दिवसपदस्य तिथिबोधकत्वेऽपि न दिनपदं तद्वाचकम् । निषेधविध्योस्तिथिस्मरणञ्च कृष्णपक्षान्तरे सकृत्करणविषयकम् आश्विनापरपक्षीयकाम्य श्राद्धपरं वेति

शक्त्यसाधकम् । नचापरपक्षस्याहःस्वित्युपक्रम्य प्रथमेऽहनीत्यादि तिथ्याभिधानाद्दिनपदन्तिथशक्तमिति वाक्यम् काम्यश्राद्धविधावेव तथात्वात् । दिनपदस्याहःपदभिन्नत्वाच्च । नच पञ्चम्यादिना विभजनात्तिथिरर्थः अप्रयोजनकत्वात् । नच त्रिदिनस्पृक् तिथित्रयस्पर्शनादह्न इति वचनेऽहःपदेन तिथिबोधनात्तत्र शक्तिः, दिनपदस्याहःपदभिन्नत्वाच्च । दिनलोप इति स्वयं तिथ्यभिधानमपि शक्तिग्राहकम्, कालविधिपरत्वात् । पूर्वमेव दिनङ्ग्राह्यमित्यादौ, चतुर्याम एव प्रयोगेण कोषेण च शक्तिः त्रिभागः प्रतिपदादि चतुष्टय-चतुर्द्दश्यः भागम् , त्रिभागस्य भागितयाऽनुपस्थितः ।

त्रिभागस्याव्यवहितत्वात्तदर्द्धमर्थ इति चेत् त्रिभागं पक्षमिति विवक्षितत्वेन पक्षस्याव्यावहितोपस्थितत्वात् । चतुर्द्दशीभागे सिद्धे द्वादश्यादिर्वेत्यत्र द्वादश्यन्त एकादश्यन्तो वेत्यत्र विनिगमनाविरहप्रसङ्गाच्च । चतुर्द्दशार्द्धस्याष्टम्यादेरेवास्मिन्मते वारणतया सिद्धिः । नच सप्तम्यन्त एव पक्षार्द्धतया विवक्षितम्, दशम्यादेः प्राशस्त्यात । चतुर्द्दशीत्यागे मानमप्यर्द्धमित्यत्र समभागेऽन्यथानुपपत्तिरेव ।

मिश्रास्तु - देवीपुराणवचनान्नित्यमपि मरीचिना निषिद्धं श्राद्धञ्च चतुर्द्दश्यामित्याहुः, तच्चिन्त्यम् । तद्वचनयोरेकोद्दिष्ट विषयकत्वेन पार्वणबोधकत्वात् नच दिन दिन इति वीप्साभङ्गः ।

सन्ध्यारात्रिवारणायापर्युदस्तदिनपरत्वाद्दिनपदस्य । अत्र प्रतिपदादिपार्वणे कृते क्षतादिना प्रतिबन्धे कल्पान्तरमारम्भणीयमिति प्राचाम्मतमयुक्तम् । कालनियम शक्तित इत्यस्य प्रतिपद्यशक्तः पञ्चम्यादौ कुर्यादित्यादिरर्थो युक्तः । नतु चतुर्थ्यामशक्त इत्यर्थः । प्रतिपदि क्षतिनश्चतुर्द्दश्यां शक्तस्य पञ्चम्यादयनाचरणप्रसङ्गादिति दिक् ।

यथाऽहरहः स्नायादिति विधावपि रोगे स्नानमकृतमपि तदपगमे यथा क्रियते तथा क्षतेऽकृतमपि द्वितीयाश्राद्धं पञ्चम्यादिश्राद्धे न बाधकमिति तत्कथन्न क्रियत इति चेत् ।

अत्र वदामः - अर्द्धमेव वेत्येवकारेण पक्षचतुष्टयान्यव्यवच्छेदादिति ।

एकप्रयोगापन्नमिदं प्रेतषोड़शीवदित्येकजातीयेनैवान्ने न श्राद्धानि सर्वाणि कार्याणि। कन्यातुलयोरिति आश्विनकृष्णप्रतिपदादि - कार्त्तिकामावास्यान्त- कालपरम्, अन्यदा श्राद्धानुपदेशात्।

मलमासवति वर्षे प्रतिपत्पूर्वदिनद्वयपरमपि कन्याषोड़शांशपरत्वात्। प्रायेत्यादि यावद्वचनं वाचनिकमिति न प्रसवमृताया इदं श्राद्धम्। कृतपत्य- नुमरणायास्तु तच्छ्राद्धमग्निपतितत्वात्, पुंस्त्वस्योद्देश्यगतत्वात्, न विवक्षितस्त्रीणामपि शस्त्रहतश्राद्धम्। "न योषिद्भ्यः पृथग्दद्यादित्यत्र वृद्ध्य- न्वष्टकादाविवात्र विशेषविधेः सङ्कोचः। पञ्चम इत्युत्सर्गः मलमासपाते तु सप्तमः। दद्यादिति पार्वणं शस्त्रहतश्राद्धङ्कुर्यादित्यर्थः। महस्य पितृणा- म्वत्सरस्यालयेऽपरपक्षे षडशीतिदिनानि मुखं प्राक्तनं यस्य द्विःस्वभावेषु मिथुन- कन्याधनुर्मीनेषु भागेऽतीतेषु अक्षयं कल्पान्तपर्यन्तं पितृतृप्तिजनकम्। इदञ्च फलश्रवणात् काम्यम्। घातिनाम् - घातवताम्, युवानः - षोड़शवर्षानन्तरं त्रिंशद्वर्षपर्यन्तम्, वर्त्तमानं शरीरं यस्यात्मनः गृह इति शस्त्रघातनैरपेक्ष्य- परम्। उद्बन्धो वृक्षादावूर्ध्वप्रदेशे बन्धनम्। दशपञ्च चेति - भाद्रेष्वपि गृहीत्वा तिथिवृद्धिमभिप्रेत्य वा पितर इत्यभिधानान्न मातुरिदं श्राद्धम्।

लुप्तेति - ब्राह्मणहतपतितादय इत्यर्थः।

> "ब्राह्मणादिहते ताते पतिते सङ्गवर्ज्जिते।
> व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ।।"

इति वचनात् शस्त्रहतश्राद्धान्यपरम्। आश्विनामावास्याश्राद्धं पक्ष- श्राद्धाकरणेऽपि कार्यम्, गौतमवचनासङ्कोचात्।

यत्तु—दिने दिन इति विहितस्यानुवादे विध्यनुवादवैषम्यमिति मिश्र- लिखनं तत्पस्पृशम्, भिन्नवक्तृकत्वेनानुवादविरहात्। कृष्णपक्षाच्चिरकाम्य- श्राद्धानि तिथिनक्षत्रवारविहितानि लिखितानि निबन्धेषु तानि नामान्येव युज्यन्ते न ब्राह्मणव्यतिरेकेण। सकलाङ्गोपेतस्यैव काम्यस्य फलजनकत्वात्। साग्नेश्चन्द्रक्षयोऽमावास्या स्थानीयः। पिण्डपितृयज्ञश्च तत्पूर्वकृत्यः प्रपञ्चितो निबन्धेषु।

"मया चोपेक्ष्यते सर्वं मैथिलानां सपात्रक।
श्राद्धानाचरणात् प्रायोऽग्निहोत्रविरहात्तथा ॥"

अथ काम्यानि कानिचिल्लिख्यन्ते

**विष्णुः**—"आदित्यसङ्क्रमणञ्चैव तथा च विषुद्वद्वयम्।
व्यतीपातश्च जन्मर्क्षमभ्युदयाय कल्पते ॥
एतांस्तु श्राद्धकालान्वै काम्यानाह प्रजापतिः ॥"

विषुवस्य पृथगभिधानं फलातिशयबोधनाय।

**मनुः**—"श्रवणाश्विधनिष्ठाद्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥"

नागदैवतम् - मस्तकस्थं यस्य तस्मिन्नाश्लेषानक्षत्रे।

**ज्योतिषे**—"सिंहस्थौ रविभौमौ चेन्मेषस्थे च रवौ सिता।
द्वादशी हस्तसञ्युक्ता व्यतीपातो महान्हि सः ॥"

**अभ्युदयः**— स्वविवाहः। पितृमरणोत्तरमाद्यो, जीवत्यपि पितरि द्वितीयादिश्च। तदुक्तम्—

**ब्राह्मे**—"सर्वे विद्याव्रतस्नाता विवाहाद्ब्राह्मणादयः।
तथा नान्दीमुखेभ्यश्च श्राद्धङ्कार्यं समृद्धये ॥
ततो विवाहः कर्त्तव्यः शुद्धः शुभसुतप्रदः।
युगाद्येषु युगान्तेषु श्राद्धमक्षयमुत्तमम् ॥
श्राद्धन्तु पौर्णमास्याम्वै कृत्वा पूर्णफलं लभेत्।
अमावास्यान्तु श्रवणं रक्षोघ्नं वैष्णवं यदा ॥
पितृभ्यस्तु तदा श्राद्धं दत्तमक्षयमुच्यते।"

युगाद्या वैशाखशुक्लतृतीया, कार्त्तिकशुक्लनवम्यपरपक्षत्रयोदशी, माघ्यः। युगान्ताः सिंहवृश्चिकवृषकुम्भसङ्क्रमाः।

मात्स्ये—"अयनद्वितये चैव विषुवद्वितये तथा।
सङ्क्रान्तिषु च सर्वासु पिण्डनिर्वापणादृते॥
वैशाखस्य तृतीयायां नवम्याङ्कार्त्तिकस्य च।
श्राद्धङ्कार्यन्तु शुक्लायां सङ्क्रान्तिविधिना रवि॥
अनेन विधिनाश्राद्धं त्रिरब्दस्येह निर्वपेत्।"

मनुः—"हेमन्तग्रीष्मवर्षासु त्रिरब्दस्येह दिर्वपेत्।
कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षो विशेषतः॥"

ऋतुवर्षमभिप्रेत्येह - ऋतु इति फलभूमेच्छाविरहे "पिण्डनिर्वपनं कुर्यान्नवा कुर्याद्विचक्षण" इति वचनात् पिण्डहीने चावाहनादि न कार्यम्।

'अग्नौकरणमर्घ्यञ्चावाहनञ्चावनेजनम्।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्ज्जयेत्॥"

वायुपुराणे - "मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः।
अमावास्यां प्रयत्नेन श्राद्धङ्कुर्याच्छुचिः सदा॥
सर्वान्कामानवाप्नोति स्वर्गञ्चानन्त्यमश्नुते।"

मन्वादयो महानवमीबोधद्वादशी चैत्रभाद्रशुक्लतृतीये फाल्गुनपञ्चदश्ये पौषशुक्लैकादशी आषाढशुक्लदशमीश्रावणकृष्णाष्टमीमाघीसप्तमीपूर्णिमा च चैत्रीज्येष्ठ्याषाढी चेति चतुर्दश। प्रयत्नेनेति। कृष्णपक्षश्राद्धं सकृद्यद्विहितं तत्सति सम्भवेऽनग्निनाऽमावास्यायामेव कार्यम्।

"न दर्शन विना श्राद्धमाहिताग्नेर्द्विजन्मन" इति वचनात् साग्निना नियमेन कार्यमित्यर्थः। सावकाशश्राद्धान्तरमप्यतएव दर्शकृत्यं साग्नेः। सर्वान् प्रतिपदादिषु कथितान्।

"पक्षत्यादि विनिर्द्दिष्टान् विपुलान् मनसः प्रियान्।
श्राद्धदः पञ्चदश्यान्तु सर्वान् कामान् समश्नुते॥

इति वचन आद्यपादसार्थकतार्थमिलितफलतात्पर्यविगमात्। काम्यप्रसङ्गेन चेह नित्यसिद्धिः। पाकाद्यङ्गवैकल्येन तु नित्यमेवाचरन्ति शिष्टाः।

मात्स्ये—"एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।
भार्याविरहितोप्येतत्प्रवासस्थोऽपि नित्यशः ॥
शूद्रोप्यमन्त्रवत्कुर्यादनेन विधिना नृप ।"

कुर्याद्वैदिकमन्त्रसहितं नैनं व्याहारयेद्ब्रह्मसुरानियनादृत इति वचनात् । अपिशब्दे स्त्रीकर्तृकाभ्युदयिकादौ मन्त्रनिवृत्तिः ।

विष्णुपुराणे—"अमावास्या यदा मैत्रविशाखास्वातियोगिनी ।
श्राद्धैस्तु पितरस्तृप्तिं प्राप्नुवन्त्यष्टवार्षिकी ॥
अमावास्या यदा पुष्ये रौद्रर्क्षे च पुनर्वसौ ।
द्वादशाब्दास्तदा तृप्तिं गच्छन्ति पितरोर्चिताः ॥
वासवाजैकपादर्क्षे पितृणां तृप्तिमिच्छता ।
वारुणेन त्वमावास्या देवानामपि दुर्लभा ॥

"माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः परं पितृणां न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥
कालेधनिष्ठा यदिनाम तस्मिन्तरन्ति भूपाल तदा पितृभ्यः ।
दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥
तत्रैव चेद्भाद्रपदास्त्वपूर्वा काले तदा यत्क्रियते पितृभ्यः ।
श्राद्धन्तदा तृप्तिमुपैति तेन युगं सहस्रं पितरः स्वपन्ति ॥"

मैत्र - मनुराधा, रौद्र - मार्द्रा, वासवं - धनिष्ठा, अजैकपादर्क्षं पूर्वभाद्रम्, वारुणं - शतभिषा, अपूर्वाः - उत्तराः, पूर्वा इति रेवती पूर्वा इत्येक एवार्थः ।

'नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ।
इच्छाश्राद्धानि कुर्वीत नवशस्यागमे तथा ॥"

पार्वणाशक्तम्प्रत्याह—

अन्नेन वा यथाशक्त्या कालेऽस्मिन् भक्तिनम्रतः ।
भोजयिष्यति विप्राणां तन्मात्रविभवो नरः ॥

असमर्थोऽन्नदानस्य धान्यमन्नं स्वशक्तितः।
प्रदास्यति द्विजाग्रेभ्यः स्वल्पम्बा पितृदक्षिणाम् ॥

तत्राप्यसामर्थ्ये—

"प्रणिपत्य द्विजाग्राय कस्मैचिद्संप्रदास्यति।
तिलैः सप्ताष्टभिर्वाऽपि समवेतान् जलाञ्जलीन् ॥
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति।
यतः कुतश्चित्सम्प्राप्य गोभ्यो वाऽपि गवाह्निकम् ॥
अभावे प्रीणयन्नस्मान् श्रद्धा युक्तः प्रदास्यति।
सर्वाभावे वनङ्गत्वा कक्षमूलप्रदर्शकः ॥
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति।
नमेऽस्ति वित्तं न धनं च चान्यच्छ्राद्धोपयुक्तं स्वपितॄन्नतोस्मि।
तृप्यन्तु भक्त्या पितरौ मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य ॥"

ब्राह्मे—"शुक्लाङ्गारकयुक्ता च चतुर्थी जायते यदा।
श्रद्धया श्राद्धकृद्विप्रो न प्रेतो जायते क्वचित् ॥"

श्राद्धान्येतानि पार्वणरूपाणि पकृतित्वेन शीघ्रोपस्थितेः।

## अथ श्राद्धमुहूर्त्ताः

मात्स्ये - "ऊर्ध्वं मुहूर्त्तात्कुतपाद्यन्मुहूर्त्त - चतुष्टयम्।
मुहूर्त्तपञ्चकञ्चैव स्वधावाचनमिष्यते ॥
सायाह्नस्त्रिमुहूर्त्तस्स्याच्छ्राद्धन्तत्र न कारयेत्।"

मनुः - "रात्रौ श्राद्धं न कुर्वीत राक्षसी सा हि कीर्त्तिता।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥"

विष्णुः - तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्।"

शातातपः - "दिवसस्याष्टमे भागे मन्दीभवति भास्करः।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥"

अचिरोदिते मुहूर्त्तद्वयपर्यन्ते तयोः सन्ध्याराज्योः अचिरोदितसायाह्नयोः। भागो - मुहूर्त्तः।

एवञ्च तृतीयमुहूर्त्तमारभ्य द्वादशमुहूर्त्तसमाप्तिपर्यन्तं श्राद्धकालः इति।

ब्राह्मे - पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥"

मनुः - "यथा चैवाऽपरः पक्षः शुक्लपक्षाद्विशिष्यते।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते॥
शुक्लपक्षस्य पूर्वाह्णे श्राद्धङ्कुर्याद्विचक्षणः।
कृष्णपक्षापराह्णे तु रोहिणन्नतु लङ्घयेत्॥"

पूर्वाह्णादेः प्रशंसया फलातिशयः। सति सम्भवे तद्ग्रहणञ्च, नतु नियमः। मध्याह्ने क्षयतिथेरमावास्यायामपराह्णस्य माघ्यादौ पूर्वाह्णे विहिततिथ्यलाभे नामकर्मादौ पूर्वाह्णातिक्रमे च श्राद्धलोपापत्तेः। रोहिणं नवममुहूर्त्तं न लङ्घयेत, तदनन्तर दशममुहूर्त्तादौ भविष्यदिनकुतपेऽपि न कुर्यादेकोद्दिष्टन्तत्प्रधानकम्, सपिण्डनम्वेत्यर्थः। मलमासो वर्षकृत्ये निरूपितस्तद्वतिबर्षे श्राद्धन्निरूप्यते -

हारीतः - "प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया बुधैः।
क्वचित्त्रयोदशेऽपिस्यादाद्यमुक्त्वा तु वत्सरम्॥
चक्रवत्परिवर्त्तेत सूर्यः कालवशाद्यतः।
अतस्सांवत्सरं श्राद्धङ्कर्त्तव्यं मासचिह्नितम्॥
मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि।
यतस्तत्र विधानेन मासः स परिकीर्त्तितः॥
असङ्क्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमम्बुधैः।
तथैव मासिकं पूर्वं सपिण्डीकरणन्तथा॥
नित्यनैमित्तिके चैव नाधिमासं विदुर्बुधाः
गर्भे बार्धुषिकृत्ये च मृतानां पिण्डकर्मसु॥"

विष्णुः - सपिण्डीकरणं मासिकार्थवद्द्वादशाहं कृत्वा त्रयोदशेऽप्यह्नि कुर्यान्मन्त्रवर्जन्तु शूद्राणां द्वादशेऽह्नि सर्वमेवं वर्षाभ्यन्तरे यद्यधिमासपातो भवेत्तदा मासिकार्थं दिनमेकं वर्द्धयेत् ।

ऋष्यशृङ्गः - "मलिम्लुचे च सम्प्राप्ते ब्राह्मणो म्रियते यदि ।
यस्मिन् राशिगते भानौ विपत्तिः स्याद्द्विजन्मनः ॥
तस्मिन्नेव प्रकुर्वीत पिण्डदानोदकक्रिया ।"

द्वादशे त्रयोदशे पूर्णेऽग्रिमतिथौ । आद्यमिति मासतिथ्युल्लेखसङ्गतौ सत्यामाद्यं वार्षिकम् । सपिण्डनञ्च द्वादशमासानन्तरतिथौ कार्यमिति तात्पर्यार्थः ।

मासेति सौरभिन्नेत्यादिः । पौषेत्यादि कृष्णादिचान्तपरविधानेन प्रत्यब्दं द्वादश इत्यादि विध्यनुसारेण । असङ्क्रान्ते मलमासे उल्लेखसङ्गताविति शेषः । पूर्वं सपिण्डनपूर्वकृत्यं चरमं मृतानामित्यनेन दशाहिकपिण्डकथनम् । तदेति उल्लेखासङ्गताविति विशेषः ।

एकं मलमासनिष्ठषष्ठत्वादियुक्तं बर्द्धयेत् । मासिकद्वयवत्कुर्यात् । न दद्यादिति द्वादशमासाग्रिमतिथावुल्लेखसङ्गताविति विशेषः । ब्राह्मणद्विजन्मपदे श्रद्धोद्देश्यपरे यस्मिन्नासीत्यलुक्समासः । द्वादशे त्रयोदशे चोल्लेखसङ्गताविति शेषः । कृष्णादिमास एव श्राद्धेषूल्लेख्येत्यादि प्रञ्चितं वर्षकृत्ये ।

ज्योतिषे - "रविणा लङ्घितो मासश्चान्द्रःख्यातो मलिम्लुचः ।
तत्र यद्विहितङ्कर्म उत्तरे मासि कारयेत् ॥
जातकर्मणि यच्छ्राद्धं नवश्राद्धन्तथैव च ।
प्रतिसम्वत्सरश्राद्धं मलमासेऽपि तत्स्मृतम् ॥
प्रतिसम्वत्सरश्राद्धमशौचात्पतितञ्च यत् ।"

जातकर्मणि - पुत्रजन्मकर्मणि । न सोष्यन्ती जातकेत्यादिनिषेधेन यथाश्रुतेरसङ्गतेः । नवश्राद्धम् - अस्थिसञ्चयश्राद्धम् । प्रतीतिप्रथमवार्षिकमसम्भवन्मासोल्लेखकरमित्यादि । अशौचपतितं प्रथमद्वितीयादिवार्षिकञ्च ।

अत्र शुक्लादिमुख्यतयोल्लेख्य इति दुर्वासनाविलासवासिता मिश्रादयो दोषव्यामिश्रमतयो ग्रन्थान्तर्गत उपरिश्रमेण कण्ठतो न निराक्रियन्ते। श्राद्धदेशस्थापनीयापसारणेयौ श्राद्धिब्राह्मणविधिनिषेधौ बहुधा निबन्धेष्वभिहिताविह सुगमौ, ग्रन्थगौरवभिया न लिख्यते। श्राद्धे देयादेयानि भक्ततण्डुलमांसादीनि च सुगमत्वादुपेक्षितानि। कुशास्तु विशेष विशदत्वायोपदिश्यते।

हारीतः—श्वो भूते दक्षिणान्दिशि गत्वा दक्षिणाग्रप्रणतान् समूलान् कुशानाहरेदपरिगृहीताश्चापः। भाद्रामावास्यायां कुशस्य गङ्गाजलस्य चासन्न इदम्।

यमः– समूलस्तु भवेद्दर्भः पितृणां श्राद्धकर्मणि।"

गोभिलः—वर्हिरूपमूललूनाः पितृभ्यः। पिण्डास्तरणार्थमिति शेषः।

हारीतः—चितौ दर्भाः पथि दर्भा येदर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षड्दर्भान् परिवर्जयेत्॥
पिण्डार्थं ये स्तृता दर्भाः यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टे धृता ये च तेषां त्यागो विधीयते॥
नीवीमध्ये च ये दर्भा यज्ञसूत्रे च ये धृताः।
पवित्रांस्तान्विजानीयाद्यथाकायस्तथा कुशाः॥
आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः।
नोच्छिष्टस्तु भवेत्तत्र भुक्तशेषन्तु वर्जयेत्॥"

त्यागेति – मोटकसपवित्रकुशयोरुपग्रहः।

"स्तरणम्वर्हिषः ब्रह्मयज्ञाद्यर्थं कुशस्य च।"

मूत्रोच्छिष्ट इत्यत्रापवादे नीवीत्यादि। शेषमभिहितं सन्ध्याप्रकरणे।

ब्राह्मे - "हरिताश्च सपिञ्जलाः स्निग्धाः पुष्टाः समाहिताः।
गोकर्णदीर्घाश्च कुशाः सकृच्छिन्नाः समूलकाः॥
पितृतीर्थेन ते देया दूर्वाश्यामाकमेव च।
काशाःकुशा बल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः॥

मौञ्जञ्च शाद्वलञ्चैव षटकुशाः परिकीर्त्तिताः ।
श्राद्धे वर्ज्याः प्रयत्नेन ह्युलपाः सगवेधुकाः ॥"

पिञ्जलमभ्रं, समाहिताः शोभनाः, तीक्ष्णेति गोभिलैर्वल्वजनिषेधस्तदितरपरः । देया मूलस्थानकरा छेद्याः । शाद्वलं नवं मौञ्जम्, दर्भा - दर्भानुकल्पाः । गवेधुको - गरड़ीति प्रसिद्धः । उलपः - सावय इति प्रसिद्धः ।

ब्राह्मे - "अरत्निमात्राश्च कुशाः पितृतीर्थेन संस्कृताः ।
उपमूलन्तथा लूनाः पिण्डसंस्तरणे कुशाः ॥"

अरत्निः - बद्धमुष्टिकरः ।

"गुन्द्राः श्राद्धे क्षीरिकुशा वल्वजा गन्धकी तथा ।
वीरणाश्चोलपाश्चैव लम्बा वर्ज्याश्च नित्यशः ॥"

गुन्द्रो - भद्रमुस्तकः । क्षीरी - निस्सरणमाणक्षीरः । वल्वजा - एमार इति प्रसिद्धा । अतीक्ष्णः तीक्ष्णस्य च विधिः । गन्धकी - गन्धतृणम् । लम्बा अरत्नितोऽधिकमानाः । नीली कार्पासक्षेत्रजाश्च निषिद्धाः ।

बौधायनः - "देवानामृजवो दर्भाः पितृणां द्विगुणाः स्मृताः ।"

## अथ निमन्त्रणम्

उशनाः--गोमयोदकैर्भूमिभाण्डमार्जनशौचङ्कृत्वा श्वः कर्त्तास्मीति निश्चित्य ब्राह्मणान्निमन्त्रयेच्चतुरवान् । चतुर्न्नाम - वरास्त्रयपर्यन्ता एकैकस्य ।

वाराहे - "वस्त्रशौचादिकर्त्तव्यं श्वः कर्त्तास्मीति जानता ।
स्थानोपलेपनं भमौ कृत्वा विप्रान्निमन्त्रयेत् ॥

कर्णकाष्ठञ्च विसृजेद्ब्रह्मचारी शुचिर्भवेत् । विसृजेद् ब्राह्मणाय दद्यात् ।

देवलः--"श्वःकर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ॥
असम्भवे परेद्युर्वा ब्राह्मणांस्तान् निमन्त्रयेत् ।
अज्ञातीन् असमानार्षानयुग्मानात्मशक्तितः ॥"

महाप्रकरणानि श्राद्धे सकृद्भोजनं तदनन्तरसपवित्रकरस्य रात्रौ विप्रस्य कृतभोजनस्य निमन्त्रणम्। श्राद्धदिने प्रातर्मध्याह्ने वा निमन्त्रणं वैकल्पिकमङ्गमित्यर्थः। एवञ्चापात्रकेऽपि सकृद्भोजनमेकादश्यादौ फलाद्याहाररूपमप्यङ्गम्।

ननु तीर्थप्राप्तिग्रहणक्षयाहाद्यज्ञानस्थलीयश्राद्धे पूर्वदिने तत्करणानिश्चयात्। यद्यहमेतत्कालिकशौचादिमान् श्वः स्थास्यामि नचागन्तुकनिमित्तं भविष्यति तदा करिष्यामीति निश्चयस्तु पुत्रववाहादिस्थलेऽस्त्येव पुत्रजन्मनि श्वो भावित्वानिश्चयान्नैकभुक्तमिति दिक्।

मात्स्ये— "दक्षिणं जानुमालभ्य त्वं मयात्र निमन्त्रितः।
एवं निमन्त्र्य नियमान् श्रावयेद्विधिपूर्वकम्॥
अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः।
भवितव्यं भवद्भिर्नः श्वो भूते श्राद्धकर्मणि॥
उदपात्रञ्च कांस्यञ्च मेक्षणञ्च समित्कुशम्।
आचरेदथ सव्येन सर्वं दक्षिणतः शनैः॥
एवमासाद्य तत्सर्वम्भवनस्याग्रतो भुवि।
गोमयेनोपलिप्तायां गोमूत्रकृतमण्डलम्॥
अभ्युक्ष्यादिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत्।
विप्राणां क्षालयेत्पादावभिनन्द्य पुनः पुनः॥

यमः— "प्रार्थयीत प्रदोषान्ते भुक्तानशयितान् द्विजान्।
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः॥
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा।
ते तं तत्खलु विघ्नेन यास्यन्ति रजनी यदि॥
यथाश्रुतं प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः॥"

शङ्खः— "ब्राह्मणानुपमन्त्रयेत्, श्वोऽद्येति वा श्राद्धमाचरिष्यति इति।

औरसः— "तिथेरामन्त्रितो दाता प्रातः स्नातः सहाम्बरः।
आरभेत नरैः पात्रैरन्नारम्भं सबान्धवैः॥

तिलाँश्च विकरेत्तत्र परितो बन्धयेदजान् ।
असुरोपहतं श्राद्धं तिलैः शुद्ध्यत्यजेन च ॥
ततोऽन्नं बहुसंस्कारैर्नैकव्यञ्जनभक्ष्यवत् ।
चोष्यपेयादिसम्बद्धं यथाशक्त्युपकल्पयेत् ॥
ततोऽनिवृत्ते मध्याह्ने क्लृप्तलोमनखान् द्विजान् ।
अधिगम्य यथामार्गम्प्रयच्छेद्दन्तधावनम् ॥
तैलमुद्वर्त्तनं स्नानं स्नानीयञ्च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविक - पूर्वकम् ॥
ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयञ्च सम्प्रयच्छेद्यथाक्रमम् ।"

पूर्वदिने दक्षिणप्लवां भूमिं परिकल्प्य एकभुक्तङ्कृत्वा निमन्त्रयेत् । अमुकस्य श्वः श्राद्धमाचरिष्यामि त्वं मयात्र निमन्त्रित इत्यभिधाय तत आचरिष्यसिचेत् यद्यविघ्नेन रजनी यास्यति सर्वमेतान् करिष्यामिति विप्रैरुक्ते ततो मैथुननिवृत्तौ श्राद्धविप्रकर्त्तारावरुणोदये स्नानादि कुर्याताम् । ततः श्राद्धकर्त्ता कुशानाहृत्य भूमौ गोमयोदकलिप्तायां तिलगौरसर्षपान्विकीर्य्य परितोऽजान्बन्द्धयित्वा भूमिं पञ्चगव्यादिना परिशोध्य स्वयं सपिण्डस्त्रीद्वारा पाकमारभेत् ।

अथ क्लृप्तश्मश्रुनखेभ्यस्ताम्रपात्रैस्तैलोद्वर्त्तनसुगन्धिचन्दनजलदन्तकाष्ठानि दद्यात् । उद्वर्त्तनपूर्वकस्नानानन्तरमागतान्दर्भेषु तिष्ठन् विप्रान् स्वागतमिति पृच्छेत् । सुस्वागतमित्युत्तरिते गोमूत्रं सकृतप्रवासं मण्डलं यवपुष्पजलैरभ्यर्च्यं कल्पिते कुशासने अत्रमोदध्वमिति अत्रास्यतामिति वा उदङ्मुखं विप्रमुपवेश्य सविनयं तस्य पादौ प्रक्षाल्यार्घमपसव्येन दत्वा पित्रादिभ्यो ब्राह्मणपादयोः इदन्त्वाचमनीयमित्याचम्य गृहं प्रविश्य सिद्धमित्यत्राभिप्रायेणाभिधाय श्राद्धमारभेत् ।

प्रातः सद्यो वा निमन्त्रणे श्व इत्यत्राद्येत्युह्यम् । बहुवचनाऽभ्यर्थनादिवाक्ये चैकवचनम् । पादप्रक्षालनात्प्राक् च निमन्त्रणंसकृत् पूर्वदिनमैथुनस्य कार्यमिति श्रीदत्तः । तच्चिन्त्यम् । क्रमभेदे मानाभावाद् शब्दरविरुद्धाच्च ।

स्त्रीकर्तृके श्राद्धे निमन्त्रणानन्तरं प्रार्थनावाक्ये श्राद्धकारिणेत्यत्र नोहः। मत्पदार्थस्यात्मनः पुंस्त्वसङ्गतेः। निमन्त्रित इत्यादि कर्मणि क्तः। प्रतीक्षेति - अनिन्द्येनामन्त्रितो नापक्रामेदित्यादिकात्यायनेनैतद्विवृतम्। आमन्त्रित इति स्नात इत्येतन्मात्रेऽन्वेति। आरभतेत्यत्र च दातेत्यन्वेति। बान्धवः - सपिण्डपुरुषस्ततः स कर्त्ता वा। पाकारम्भः प्रातः स्नानवत्तिथ्यन्तरेऽपि प्रयोगवहिर्भावात्। निमन्त्रणशेषभक्षणादिकमपि तथा।

नवैरिति मानाभावेन मृण्मयत्वमत्राविवक्षितम्। तिलांश्चेति - कुतुपकृष्णाजिनतिलसिद्धार्थकानि। रक्षोघ्नानि दद्यादिति विष्णूक्तनेपालकम्बलादिसन्निधापनमभिहितञ्चकारेण।

> "यतिस्त्रिदण्डः करुणा राजतं पात्रमेव च।
> दौहित्रं कुतपश्छागः कालः कृष्णाजिनन्तथा॥
> गौराः कृष्णास्तथारण्या विज्ञेयास्त्रिविधास्तिलाः।"

इति ब्रह्मपुराणोक्तसन्निधापनमपि समुचितम्।

> "अमावास्याङ्गते सोमे या च खादति गौस्तृणम्।
> दौहित्री सा समाख्याता दौहित्रं तद्घृतं स्मृतम्॥
> दौहित्रं खड्गमित्याहुर्ललाटाद्यद्विजायते।
> तस्य शृङ्गस्य यत्पात्रं दौहित्रमिति तत्स्मृतम्॥
> रूप्यं दर्भास्तथा गावो दौहित्रश्चाष्टमः स्मृतः।
> पापं कुत्सितमित्याहुस्तस्य सन्तापकारकाः॥
> कुतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते।
> श्राद्धं पुनाति वै यस्मात्कुतपस्तेन स स्मृतः॥

इति पैठीनसिवाक्ये च दर्शितानां दौहित्रकुतपानामन्यतममवश्यमुपादेयम्।

दौहित्रो दुहितृपुत्रः। अष्टमो मुहूर्त्तो अष्टमः कुतपः। संस्कारः कटुकाम्लादिः, नैकमनेकं भक्ष्यम्। कदलाद्युपकरणमनिवृत्तोऽसमाप्ते। यथा मार्गं मार्गाभिमुखम्। औदुम्बरैस्ताम्रैः।

आपस्तम्बः—पूर्वेद्युर्निवेदनमपरेद्युर्द्वितीयं तृतीयमामन्त्रणम्। श्वो मया श्राद्धङ्कार्यन्तत्र भवन्तो निमन्त्रणीया इत्याद्यम्। प्रभाते द्वितीयम्। श्राद्धकाले वाक्येनापसव्येन निमन्त्रणं तृतीयम्। प्रातर्निमन्त्रणे द्वयं सद्यस्त्वेकमेव। साधुभिः संनिमन्त्रयेदिति यमवचनादाद्यौ सवर्णसाधुद्वाराऽपि। अशक्तौ त्रयमपि तद्द्वारा कार्यम्। यं मयेत्यत्र तेनेति योज्यम्। तिलविकरणादिर्भूसंस्कारो नास्ति काश्याम्। गोमयोपलेपमात्रम्। तत्र "मेदसा व्यापिता भूमिरविमुक्ते-तु वर्ज्जितेति।

मात्स्ये— "शुचि देशं विविक्तञ्च गोमयेनोपलेपयेत्।" इति निर्ज्जन-शुचिदेशमधिकृत्यमनभिधानात्। असुरो मधुः कैटभश्च, तन्मेदसोपहता भूः। प्रातः स्नात इति श्राद्धाङ्गत्वबोधनाय। मध्याह्नस्नानञ्च कर्माङ्गमित्युक्त-माह्निके।

प्रचेताः— "मद्यवर्णस्पर्शयेदाप्तं द्विजानामुपमन्त्रणे।"

हारीतः— आमन्त्रिता आमन्त्रयिता च शुचयस्तां रात्रिं वसेयुः। द्वितीयाऽत्यन्तसञ्योग इति मैथुननिषेधः। मूत्राद्युच्छिष्टतानुशक्यवारणत्वादनिषेध्या-शावाशुचितावत्। उपरागश्राद्धादौ त्वनिषेधः। पूर्वदिने कर्त्तव्यतानिश्चया-भावात्।

मनुः— "पूर्वेऽह्न्यामन्त्रितान्विप्रान् पितरः संविशन्ति हि।
यजमानश्च तां रात्रिं वसेद्यन्निर्णितास्ततः॥"

यजमानमित्यभिधानादपात्रकेऽपि श्राद्धे मैथुननिषेधः। रात्रिनिषेधोऽ-होरात्रपरः। दिवाऽप्यतो निषेधः।

"निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा।
न च छन्दांस्यधीयीत यस्य श्राद्धञ्च यद्भवेत्॥"

नियतात्मा—मैथुननिवृत्तचित्तः। अन्यथा नादिवाक्ये चकारेण वर्ज्जन-मुक्तम्। किञ्च - तस्याङ्गमुभयतो रात्रिषूभावपि ब्रह्मचारिणौ स्यातामिति कल्पतरौ श्राद्धोत्तरकर्मप्रकरणे लिखितम्। "श्राद्धे नियुक्तो भुक्त्वा भोज-यित्वा नियुज्य वा" इत्यग्रिमलिख्यमाणञ्चात्र प्रमाणम्।

याज्ञवल्क्य :- "द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
मातामहानामप्येवं तान्त्रं वा वैश्वदैविकम् ॥"

प्राक् - पूर्वमुखाः । उदगुत्तरमुखाः । दशब्राह्मणा इत्येकः पक्षः । अष्टावित्यपरः । एकैक मेकैकस्येत्याश्वलायनः । मिलितौ द्वौ तन्त्रेण विश्व-देवयोः षट्सु च षडिति वा विश्वदेवद्वये तन्त्रेणैक इति सप्त तृतीयः कल्पः । देवयोर्मिलितयोः प्रत्येकम्वा द्वौ पित्रादित्रय एको मातामहादित्रये चापर इति चतुर्थः । देवयोरेक एवेति त्रय इति पञ्चमः पक्षः ।

पैठीनसिः- ब्राह्मणान् सप्त पञ्च वा । दैवे द्वौ पित्रादौ त्रय इति पञ्च । एवञ्च मातामहादित्रय तद्दैविकमादाय दशब्राह्मणाः । त्रींस्त्रीन्वेत्याश्वला-यनवचनन्त्वेकोद्दिष्टपरम् , पार्वणपरं वा । वीप्सा च व्यक्तिबहुत्वाभि-प्रायेण "न प्रसज्येत विस्तर" इति मनुनिषेधान्न पार्वणे चतुर्विंशतिः । न च प्राङ्मुखानुपवेश्य दैवे युग्मान्यथाशक्ति पित्र्य एकैकस्योदङ्मुखानिति कात्यायनवचनेन द्वाविंशतिर्विप्राः पार्वणास्तदधिकस्तु विस्तरो निषिद्ध इति वाच्यम् , मनुना स्वोक्तदशाधिकविस्तरनिषेधात् । अमावास्यादिमृतैकोद्दिष्टे त्रय एको वेति कात्यायनार्थः ।

कवर्कभाष्ये- "एक एव यदा विप्रो द्वितीयोनोपपद्यते ।
पितृणान्तु भवेदेको दैवन्त्वग्नौ नियोजयेत् ॥"

"अप्येकमाशयेद्विप्र"मिति नित्यश्राद्धेऽभिहितम् ।

शङ्खः- "भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥",

नैवेद्यमपि प्रक्षेप्यम् ।

वसिष्ठः- "प्राप्येदन्नं तदग्नौ वा दद्याद्वा ब्रह्मचारिणे ।"

बृहस्पतिः- "यद्येकं भोजयेद्विप्रं स्वल्पत्वात्प्रकृतस्य च ।
स्तोकं स्तोकं समुद्धृत्य तेभ्योन्नं विनिवेदयेत् ॥"

प्रकृतस्य विप्रस्यान्नस्य वा तेभ्यः पित्रादिषु त्यक्तेभ्यः । विनिवेदय-देकस्मै विप्राय ।

गौतम —नवावरान् भोजये दयायुक्तो वा यथोत्साहम् । नर अवरायत-स्थान दश अथय: पार्वणेसप्तत्रीनेकम्वा ।

आश्वलायनः - वृद्धौ फलभूयस्त्व न त्वेकं सर्वेषाम् । एवञ्चैकोद्दिष्टमेकस्य त्रयो विप्रा वर्द्धयन्ते ।

ब्राह्मे - "यस्माद ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत् ।
श्राद्धनाशो मौननाशः श्राद्धतन्त्रस्य विस्मृतिः ।।
उच्छिष्टोच्छिष्टसंस्पर्शो निन्दावादोनुभोक्तृषु ।
वितण्डया परीवादो जल्पास्ते तु पृथग्विधाः ।।"

एवञ्च दृष्टमेवानिष्टं तन्निवारणसम्भवे फलाधिक्याय ब्राह्मणबाहुल्य-मुपादेयम् । पारिजातमेधातिथिस्वरसोप्येवम ।

नन्विति - यथा बहूनां नैकः पिण्डस्तथा बहूनां नैको विप्रः अदनीयोल्पत्वे तु काममेको विप्र इत्यर्थः । अनाद्य इति । विप्राल्पत्वस्याप्युपलक्षणम् ।

केचितु - आद्यं सपिण्डनम्, तत्र नैकस्तद्भिन्नत्वेएकोपीत्याहुः । सिद्ध-मित्यभिधानं स्वकर्त्तृकपाकेऽपि आमश्राद्धे त्वनृतप्रसङ्गान्न तत्पाचिकां पृच्छेति तु नशब्दार्थः । विप्रं बोधयित्वेत्यर्थ इति नापात्रकश्राद्ध इदमप्यविरुद्धमप-दार्थत्वात् ।

ब्राह्मे - "परकीयगृहे यस्तु स्वान् पितॄन् तर्पयेद्यतः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ।।
अग्रभागस्ततस्तेभ्यो दद्यान्मूल्यञ्च जीविताम् ।"

यमः - 'अटव्यः पर्वता नद्यः पुण्यान्यायतनानि च ।
सर्वाण्यस्वामिकान्याहुर्न्नहि तेषु परिग्रहः ।।
प्रवाहमवधिङ्कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ।।"

गृहे भूमौ अग्रे च तदनुवादात् । स्वामिन् इति षष्ठी । पितृन् कर्त्त-व्यान्न त्यागोद्देश्या न तर्पयेदन्नोत्सर्गेण यः स जड़ः । हरन्ति फलंप्रति बध्नन्ति ।

दुरदृष्टेन जीवन्तस्तु श्राद्धप्रतिबन्धेन अग्रं श्राद्धसङ्कल्पविषयाणां घृतान्नव्यञ्जनकदलजलमध्वादीनां तेभ्यो भूस्वामिपितृभ्यः जीवतान्तेषांकृते मूल्यमाणातिकरङ्किञ्चिद् द्रव्यन्दद्यात् । चकारो विकल्पार्थः । जीवद्भ्यो दानं सव्येन, मृतेभ्यस्त्वपसव्येन । सपिण्डनतन्निश्चययोर्विरहान्न स्वधापदम् । तत्र वृद्धिश्राद्धे तु सव्येनैवेदं नैमित्तिकमनङ्गमिदङ्कर्मान्तरमिति मत्वाऽपसव्येनाचरन्ति प्राञ्चः । फलोपकारकस्याङ्गत्वात्तदयुक्तमित्याभाति । नित्यश्राद्धे भूस्वाम्यन्नदानं न कुर्वन्ति शिष्टास्तत्र प्राचामाचारो वीजम् । आसनगन्धादिकन्तु न देयम्, श्राद्धक्रियाविषयत्वाभावात् ।

गारुडे—"अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ॥
शङ्खचक्रधरं विष्णुं द्विभुजं पीतवाससम् ।
प्रारम्भे कर्मणां विप्रः पुण्डरीक स्मरेद्धरिम् ॥"

ब्राह्मे "नाप्रोक्षितं स्पृशेत्किञ्चिद्दैवे पित्र्ये च कर्मणि ।"

प्रारम्भे सिद्धाभिधानानन्तरं प्रोक्षणे कर्त्तव्ये स्मरेद्धरिम् पुण्डरीकनिभं तन्नयनञ्च । इदमेवापवित्रे इत्याद्युपस्थितिजन्यपदार्थस्मृतेः प्रोक्षणाङ्गत्वे मानमिति श्लोकपाठोऽङ्गमित्यत्रानङ्गव्यवायाभिधानं प्राचामविरेचनमूलकमेव । प्रोक्षणानन्तरमेव भूस्वाम्यन्नदानम् । अन्यथाऽनङ्गव्यवायादिनावरुद्धम् । अङ्गत्वस्य व्यवस्थापितत्वात्, सङ्कल्पमन्तराङ्गेऽनधिकाराच्च । तस्मात्सङ्कल्पानन्तरमन्नत्यागपूर्वं वा तद्दानम् । तत्राप्यन्त्यं साधीयः । श्राद्धपूर्वमेव हरणभिया तदग्रदानौचित्यात् ।

"अग्रभागं समुद्धृत्य जुहुयाद्धव्यवाहनम् ।"

इति मत्स्यपुराणात् । अग्रभागन्दद्यादित्यत्र तु पितर्यन्नाग्रभाग एवदेवतया विहितः । अतएवाग्नौकरणवति सपिण्डने तद्धीने वार्षिके चाग्नौकरणशेषभिन्ने भूस्वाम्यन्नदानं युज्यते । हुत्वा हुतशेषन्दत्वा पात्रमालभ्य जपतीति वाक्ये च क्त्वान्तानां प्रधानक्रियायामेवान्वय इति नोक्तक्रमबाधः । अस्तु पाठिकक्रमस्याग्नौकरणार्थोग्रोद्धरणस्य च स्वारस्यात्सङ्कल्पानन्तरमन्नत्यागपूर्वञ्च

भूस्वाम्यन्नदानमविरुद्धम्। पार्वणादौ मास्तु वा सर्वेषामग्रमित्यभिधानादाद्यः पक्ष इति संक्षेपः। कामधेनुस्वरसोऽप्येवम्। अटव्य इत्यादि राजाद्यपरिगृहीतपरम्, नहीत्यादिस्वरसात्। नद्य इत्ययुक्तम्, जलस्य श्राद्धानधिकरणत्वादिति।

तदर्थमाह पूर्वाह्नमित्यादि नारायण इति तस्य च न पितरः सन्तीति न तेभ्योऽन्नदानम्। जीवतां मूल्यदानञ्च श्राद्धप्रतिबन्धवारणार्थकमिति स्वतः सिद्धप्रतिबन्धकविरहेण कार्यम्। स्वतस्सिद्धवैतुष्येऽवघातमिव।

यत्र चैको द्वौ वा जीवन्तौ द्वौ वा एको वा मृतो भूस्वामिपितृणांमध्ये तत्र सर्वोद्देशेनान्नदानम्। जीवन् एव च मूल्यदानम्। जीवताञ्चेतिचकारस्य समुच्चयेऽप्यर्थ इत्युन्नयामः। प्रारब्धकर्मणामिति लिखितवचनादादौ स्मरणपूर्वम्प्रोक्षणम्। तच्च सकृदेव दर्भैः "उपाकृतन्तु विधिना मन्त्रेणान्नन्तथाकृत" मिति श्राद्धीयद्रव्यप्रकरणे यमवचनात्। उपकृतं मन्त्रपूर्वकन्दर्भत्रयप्रोक्षितमिदमपि मानमपवित्र इत्यादि मन्त्रपाठः।

अथ सङ्कल्पो यथाचारकाम्यश्राद्धे तु--

"मासपक्षतिथीनान्तु निमित्तानाञ्च सर्वशः।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्॥
अथ साम्वत्सरं श्राद्धङ्कर्त्तव्यं मासचिह्नितम्।"

सा तिथिस्तस्य कर्त्तव्येति वचनान्मासाद्युल्लेखः। साम्वत्सरिके प्रेतश्राद्धे तु निर्णिक्तकालकर्त्तव्यताविरहान्न तदुल्लेखः। श्राद्धसामान्यञ्चविहितत्रिविधा क्रिया चेत्युक्तम्। तत्र च प्रथमक्रियाऽभिहिता। मध्यमक्रिया तु प्रेतश्राद्धरूपा। अन्त्यत् कुम्भदानञ्चाधुनोच्यते। तानि च निरग्निना चैकोद्दिष्ट विधिनैव कार्याणि।

कात्यायनः – "द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा।
सपिण्डीकरणञ्चैव प्रेतश्राद्धानि षोडश॥"

याज्ञवल्क्यः – "मृताऽहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्।
प्रति सम्वत्सरश्राद्ध - माद्यमेकादशेऽहनि॥"

मात्स्ये—"तत्र एकादशाहे तु द्विजानेकादशैव तु ।
क्षतादिः सूतकान्ते तु भोजयेदधमो द्विजान् ॥
इतरे विपुलस्तद्वद् एकोद्दिष्टं समाचरेत् ।
अर्वाक सपिण्डीकरणं यस्य सम्वत्सराद्भवेत् ॥
सोदकुम्भन्तु दद्यात्स सर्वं सम्वत्सरे द्विज ।"

मरीचिः—मुख्य श्राद्धं मासि मासि प्रति द्वादशाहेन वा ।
भोज्या चैकादशाहे च द्वादशाहेन वा पुनः ॥"

परिशिष्टे—"श्राद्धमग्निमतां कार्यं दाहादेकादशेऽहनि ।
द्व्युवाणि तु प्रकुर्वीत मृताहारभ्य सर्वदा ॥"

ब्राह्मे—"नृणान्तु त्यक्तदेहानां श्राद्धं षोडशसङ्ख्यया ।
चतुर्थे पञ्चमेचैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसङ्ख्यया ।"

शातातपः - "सम्वत्सरे तु वै देयं सपिण्डीकरणन्त्विह ।
सपिण्डीकरणान्ता च ज्ञेया प्रेतक्रिया बुधैः ॥"

पैठीनसिः- सम्वत्सरान्ते विसर्जनं नवममास्यमित्येके ।

कात्यायनः - पूर्णे सम्वत्सरे षाण्मासे पक्षे यदहर्वा बृद्धिरापद्येत ।

व्याघ्रपादः - "आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥"

मरीचिः - "मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं पृति ।
द्वादशाहेन वा भोज्या एकाहे द्वादशेथवा ॥"

अत्र विधवामधिकृत्य-

"सपिण्डीकरणन्तासां पुत्राभावे न विद्यते ।
नीयते तु सपिण्डत्वं येषां शूद्रकुलोद्भवः ॥
सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितस्ततः ॥"

इति वचनाभ्यामवीरापारशवयोर्ब्रह्मपुराणीया, अन्येषान्तु कातीया। षोडशीति व्यवस्था सपत्नीपुत्रसत्वेऽपि कातीयः कल्पः। पुत्रिण्य इति वचनात्। प्रतिसम्वत्सरेति सपिण्डनवार्षिके मृताहनीत्यर्थः। एकादश इति विवृतं विदुषा।

अशौचव्यपगम इति। भोजयेद्विप्रंद्वितीयेऽह्नि इति काम्यम्। द्विजेश्चाद्धिब्राह्मणे। प्रवाणि-मासान्तकर्त्तव्यत्वेनावधारितानि। एकादश इत्यन्ते क्षताशौचादि न बाधकम्। तदुपमर्द्दनविधे आद्यश्राद्धे तु प्रतिबोधादशौचान्तेऽग्रिमश्राद्धदिने वा करणम्, पतितपिण्डवत्।

नवमास्यमिति बृद्धिशङ्कायां त्रिपक्षषाण्मासयोरप्येवमिति कल्पतरुः। विष्णुनोक्तं त्रयोदशेऽह्नि इत्यपि वृद्धपक्ष एव। यदहर्वा बृद्धिररिति स्वरसादिति तदाशयः।

अद्य श्वःपरश्वो वा बृद्धिश्राद्धङ्करिष्यामीति सम्भावनाबृद्ध्यापत्तिर्न तु बृद्धिदिनं पुत्रजन्मानन्तरमशौचात्। नाडीछेदपूर्वं सपिण्डनाभ्युदयिकयोरसम्भवाच्च। निगर्वन्तु वा शब्दो नावधारणे प्रसिद्धः। किन्त विकल्प एवेति त्रिपक्षनवमम सादौ न बृद्धि सम्भवाविशेषणवत्। अत्र यदहरित्यान्वयेऽनुषङ्गप्रसङ्ग इति त्रिपक्षादिबृद्ध्योः पृथगेव कालत्वमिति। अतोनिष्कर्षत्वपराह्णादौ पुत्रजन्मसम्भवे द्वादशाह एव सपिण्डनमिति बहूनां कुलाचारान्मरणशङ्कातो देहास्वास्थाशङ्कातो द्वादशाहसपिण्डनं व्याघ्रपादवचनार्थः।

द्वादशाहः शावाशौचनाशद्वितीयदिवस एकादशाह श्राद्धेदिनं वा। ब्रह्मपुराणीय एकादशाहेऽशौचप्रतिबन्धत्वाभावादेकादशदिवसीयेऽशौचापगमदिशवस कर्त्तव्यताविहित आद्यश्राद्धेऽपि तथाभावमामानन्ति मैथिलापसदास्तन्न। विशेषविधिमन्तरा वैदिककर्मणि शौचस्याङ्गत्वादिति मन्तव्यम्।

एकाहेनेति - चतुर्थीमृतस्य तत्पूर्वतृतीयायाङ्कर्त्तव्ये ऊनषाण्मासिकोनवार्षिक इति रुद्रवरः, तत्पूर्व द्वितीयायामिति मिश्राः। युक्तञ्चायम् - एकतोलकं हिरण्यमित्यति सार्द्धन्यूने प्रयोगात्। एकं लक्षं शेननाकाभावत इत्यत्र द्वादश

सहस्रेणाकारि वाक्येऽपि द्वितीयलक्षण्यवच्छेदस्येव द्वितीयमाषस्येव द्वितीया-होरात्रस्याभाव एव हि एकत्वमित्युन्नयामः।

ऋतं प्रतिमासिकद्वयमिति मासवति वर्षे न भवति। वर्षान्तरे तु पञ्चमषाण्मासिक षष्ठानि। एकादशोनवार्षिकद्वादशानि श्राद्धानि। पञ्चमषष्ठमासिकयो र्मध्य एव षाण्मासिकदिने अन्त्योपान्त्ययोर्मध्ये चोनवार्षिकन्तदाद्युत्कर्षात्। एकाहेन विहितवचनस्य प्रतिमासमासिकपक्षपरत्वात्। द्वादशभिर्द्दिनै र्मासिककरणे षष्ठद्वादशमासिकदिने षाण्मासिकद्वयम्।

तत्पूर्वमलमासवति वर्षे तु द्वादशमासिकानन्तरमूनवार्षिकमलमास पूरणीसङ्ख्यापूरकदिने मासिकद्वयम्। एवमेकाहे द्वादशेति कल्पेऽपि षष्ठद्वादशमासिकपूर्वमेव तद्दिन एव। सम्वत्सर ऊन इति स्मरणात्।

त्रिपक्षादिसपिण्डनपक्षे कृतमासि निगहीतत्वावशिष्टमासिकै र्द्वादश-त्रयोदश पूरणङ्कार्यम्। ब्रह्मपुराणीय कल्पेऽपि मलमासवति वर्षे मासिकवृद्धि-रविशेषितविष्णुवचनात्। वर्षसपिण्डनं मुख्यम्-कात्यायने प्रथममभि-धानात्। ततो-हीनमन्यत उत्कृष्टमूलषाण्मासिकमुख्यकालाभावाद द्वादशाहे प्रशंसावचनाच्च। तददिने सपिण्डनमाद्ये निरवकाशतया न नक्षत्र-निषेधः। प्रतकर्मनिषेधस्तु शावकाशपरम्।

"तत्र द्वादशिकं श्राद्धं त्रयोदशिकमेव च।"

त्रयोदशीऽतीते भवं श्राद्धं काम्यम्, षोडश श्राद्धानां प्रेतत्वनाशकत्वा-वगमात्। दाशाहिकपिण्डैकादशाहश्राद्धमासिकानि पतितान्यग्रिमसजातीयपूर्वं तद्दिने कार्याणि। दशमपिण्डचरममासिकसपिण्डानि तु नैवं सजातीया-ग्रिमविरहात्। साजात्यञ्चैकप्रयोगापन्नत्वम्।

अशौचप्रतिरुद्धवर्षं समाप्यैकप्रयोगापन्नोदकुम्भश्राद्धं प्रेतत्वमोचक-षोडशप्रेतश्राद्धं वार्षिकञ्च साग्निनिरग्नि कर्तृकमासिकषाण्मासिके क्षयाह-निरूप्याण्यशौचान्तप्राप्तविहितमुहूर्त्ते कार्याणि। न तु-पार्वणशस्त्रहत-श्राद्धानि।

राजदैवकेन प्रमादेन वा पतितान्येकोद्दिष्टानि साग्निकर्तृकञ्चाधिकृत्य--

हारीतः—"श्राद्धाविघ्ने समुत्पन्ने क्षयाहे विदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः" ॥

प्रचेताः—अविज्ञाते मृताहेऽमावास्यायां श्रवणदिवसे वा। अपरिज्ञानं मरणतिथिपक्षमासानां वैदेश्यात्। श्रवणस्य तत्तिथौ क्षयाहश्राद्धं मासिकसपिण्डने च । श्राद्धविघ्ने तदुत्तरव्यवहितायां कृष्णैकादश्याम्। तत्रासम्भवेत्वव्यहितोत्तरशुक्लैकादश्याम् । प्रमादेप्येवम्। वैदेश्ये मृताहाज्ञानोत्तरपक्षज्ञाने तत्पक्षैकादश्याम् मासज्ञाने तन्मासिकैकादश्याम्, कृष्णायाम्। तदभावे अमावास्यायाम् तदसम्भवे शुक्लायाम् तन्मासैकादश्याम् । मृताहविस्मरणे मरणश्रवणतिथौ तत्तिथेर्विस्मरणे तु - वार्षिकमासिकसपिण्डनषाण्मासिक चतुर्थ पञ्चम दिनादिश्राद्धानि कृष्णैकादश्यमावास्याशुक्लैकादिषु। तदुत्तरदिनमासएकाद्यूने श्रवणोत्तरपञ्चमदिवसेषु कार्याणीति प्रतिभाति।

शस्त्रहतश्राद्धमपरपक्षीयपित्रादिपार्वणञ्च व्यसनाशौच प्रमादादि पतितं कार्त्तिकामावास्यायाम कर्त्तव्यमिति प्रागेवोक्तम्। तस्यामशौचञ्चेत्तदा तदन्ते। अज्ञानादौ त्वेकादश्यादौ पूर्ववद्बोध्यम्।

हारीतः—"प्रेतसंस्कारकर्माणि यानि श्राद्धानि षोडश।
यथा तथापि कार्याणि नान्यथा मुच्यते हि सः" ॥

यथाकालं सम्भवेसति मुख्यकाल एव असम्भव एवं ह्यनुकल्पः फलदायो स प्रेतः इह विशिष्याभिधानमनिष्टसूचनाय ।

जावालः—सपिण्डीकरणङ्कुर्यात् पूर्णे दर्शेऽग्निमान् स्वतः।
परतो दशरात्रस्य पूर्णेऽब्दे च तथाऽपरः॥

पूर्णे—समाप्ते दशरात्रे । शूद्राणां द्वादशेह्नीति द्वादशभिर्द्दिनै र्मासिकाचरणे सपिण्डनमभिहितम् विष्णुना—

"नासपिण्ड्याग्निमान् विप्रः पितृयज्ञं समाचरेत्"। पित्रिति पिण्डेत्यादिः। एकेन पुत्रेणारम्भे कृते तत्सामर्थ्यादपरेणावशिष्टश्राद्धं समाप्यम्।

अधिकारिकृत षोड़शीत्वस्य तन्त्रत्वात्। आरम्भकार्हः सङ्कल्पः भङ्गो न दोषः। शुचिना समर्थेन मया कार्यमित्येव हि सङ्कल्पः। समापनकर्त्तु श्च न समुदाय सङ्कल्प एकदेशस्य कृतत्वात्। शर्म पदञ्च प्रेत श्राद्धे न देशम्। "सपिण्डीकरणादूर्ध्वं शर्मवर्मादिभाषण" मिति वचनात्। नच प्रेतपदवहिर्भावस्तदर्थः लक्षणापत्तेः। नच प्रेतन्तु नामगोत्राभ्यामुत्सृजेदुपतिष्ठतामिति विहितो नामोल्लेख इति शर्मपदं ध्रुवम्। सर्वेति ब्राह्मणस्योक्तमिति विधानादितिवाच्यम् नामघटकमुत्तरप्रतीकमिति हि न नामशब्दार्थोऽपि तु नामोत्तरवाच्यमिति।

अन्यथा आद्यक्षरं नामेत्यसङ्गतिप्रसङ्गात्। को नामासीति प्रश्नेऽमुकशर्माहमित्युत्तरदर्शनान्नामान्तर्गतन्तदिति व्यामोहः नामासीत्यसङ्गतेः। नाम सम्भावनायां कोऽसि किन्नामकः किन्नामोत्तरोच्चारणीयो वा इति प्रश्नार्थः। किञ्च सपिण्डीकरणदूर्द्ध्वमित्यनर्थवथं शर्मपदान्तर्भावपक्ष इति दिक्। कनिष्ठेन सपिण्डनेकृते ज्येष्ठेन पिण्डदानश्राद्धादि प्रेतपदेनोल्लिख्य कर्त्तव्यम्।

"सपिण्डीकरणान्ताच्च ज्ञेया प्रेतक्रिया बुधैः" इति वचनस्वरसात्। स्वकर्त्तव्योत्तरक्रियानर्हत्वस्य प्रेतत्वस्यावधारणात्। अधिकारिकृतपार्वणाद्यनर्हत्वञ्च सपिण्डादीनां प्रेतत्वमिति न तैष्प्रेतपदमेकतरकृतसपिण्डानन्तरन्देयम्। ज्येष्ठेऽकृतसपिण्डने कृतसपिण्डनेन विभक्तेन कनिष्ठेन पार्वणादि कार्यम्, तन्निरूपितप्रेतत्वस्योपगमात्।

प्रेतपदन्तत्र न युज्यते ब्रह्मपुराणकल्पेन षोड़शश्राद्धे स्वकर्त्तव्यैकोद्दिष्टानर्हत्वं प्रेतत्वम्।

> "मित्रबन्धु सपिण्डेभ्यः स्त्रीकुमारीभ्य एव च।
> दद्यात्तु मासिकं श्राद्धं साम्वत्सरमतोऽन्यथा"॥

इति वचनेन तत्रापि मासिकविधानात्। कुमारीश्राद्धं कानीनपुत्रकृत्यं सपिण्डनान्तम्।

अथ षोड़शश्राद्धान्तर्गताद्यश्राद्धात् ब्रह्मपुराणीयैकादशदिवसीयश्राद्धाच्च पूर्वकृत्यमभिधीयते —

मात्स्ये—"अशौचान्तद्वितीयेऽह्नि शय्यान्दद्याद्विलक्षणाम् ।
काञ्चनम्पुरुषन्तद्वत्फलवस्त्रसमान्वितम् ॥
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गञ्च कुर्वीत देया च कपिला शुभा" ॥

सूर्योदयात्प्राक् श्रुते मरणे सद्यश्शौचस्थले पादङ्कार्यम् नतु तद्दिनश्रुते द्वितीयेऽह्नि इत्येकादशाह श्राद्धपरम् ।

"अहन्येकादशे प्राप्ते यस्य चोत्सृज्यते वृषः ।
प्रेतलोकविमुक्तस्सन् स्वर्गलोकं समश्नुते" ॥

इति वचनस्वरसात् । अतएव कल्पेऽपि वृषोत्सर्गान्तङ्कर्म सिद्धयति । सम्पूज्येत्युत्तरकालत्वार्थः । तेन - दम्पति पूजाम्विना न वृषोत्सर्गः । नत्वङ्गत्वन्तदर्थः । वृषोत्सर्गाकरणेऽपि दम्पतिपूजनमविरुद्धम् । पूर्वकालत्वस्याहन्निरूपतया क्त्वाथत्वाभावात् । तस्मादेकादशाहश्राद्धकर्त्ता बृषोत्सर्गं यदि कुर्यात्तदा दम्पतिपूजानन्तरमिति वाक्यार्थः । तेन कार्तिक्यादौ श्राद्धकर्त्ताऽपि पौत्रादिः सप्तावरसप्तपूर्वपुरुषतरणकामो दम्पतिपूजनम्विनैव बृषमुत्सृजेत् । कार्तिक्यामपूपान्दत्वेति वचनात्तद्दानानन्तरं वृषोत्सर्गं इति विशेषः ।

पञ्चस्वपि स्वर्गः प्रत्येक फलम् विश्वजिन्न्यायात् । सच श्राद्धोद्देश्यनिष्ठः । नीलम्वा वृषमुत्सृजेदिति पितॄणामासंशावचनात् ।

प्रेतलोकं विमुक्तस्सन् स्वर्गलोकं समश्नुत इति फलानन्तरं वृषोत्सर्गस्य तत्कामनायैव च तमाचरन्ति, स्वर्गस्य चतुर्भिरन्यैः सिद्धेः । योगसिद्धिन्ययाच्च नैकदा फलद्वयसङ्कल्पः । बृषोत्सर्गमन्त्रार्थकथनं तत्फलबोधनार्थमनर्थकमेव तरङ्गिण्यामुक्तनयविरोधादित्युन्नयामः । प्राप्तिश्च प्रभुत्वम् । बृषोत्सर्गे शूद्रोप्यधिकारी । कृष्णेनाप्यन्त्यजन्मनि इत्युत्सर्ज्जनीयबृषोपदेशात् । एतयैवोत्सृजेरन्निति वैदिकमन्त्रोऽपि - "एतँ युवान" मित्यादिस्तेन पाठो रुद्रजपादिकमपि, प्रधानाधिकारात् । रथकारेणाधानकारिणा तदङ्गमन्त्रपाठ इवेति । स्त्रियास्तु नात्राधिकारोऽमन्त्रत्वाद्विशेषविध्यभावाच्च । शूद्रवद्वर्णशङ्करा इति वचनादिह कायस्थादेरधिकारः ।

अथाद्यश्राद्धमधिकृत्य---

वराहः —"श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रिया ।
गतोसि ब्रह्मलोकत्वं कृतान्तविहितात्पथः ॥
मनसा वाऽपि भूतेन विप्र त्वाहं निमन्त्रये ।
पूजयिष्यामि भोगेन एवं विप्रं निमन्त्रयेत् ॥
अस्तङ्गते तथाऽदित्ये गत्वा विप्रस्य मन्दिरम् ।
दत्वा तु पाद्यं विधिवत् नमस्कृत्य द्विजोत्तमम् ॥
पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया ।
प्रभातायाञ्च शर्वर्यामुदिते च दिवाकरे ॥
श्मश्रु कर्म कारयित्वा नखच्छेदमतः परम् ।
स्नपनाम्यञ्जने दद्याद्विप्राय विधिपूर्वकम् ॥
आगन्तुकं द्विजन्दृष्ट्वा कर्त्तव्या स्वागतक्रिया ।
अर्घपात्रन्ततऽकृत्वा हृष्टपुष्टेन मार्धाव" ॥

आसनञ्चोपकल्प्येत मन्त्रेणविधिपूर्वकम् । अत्रासने देवराजाऽभ्यनुज्ञातो विप्रस्य ताँ द्विजवर्यानुग्रहात् ।

प्रसादये त्वासनं गृह्य पूतज्ञानाग्निपूतेन करेण विप्र ।
प्रक्षाल्य यादौ शिरसाभिवन्द्य जानूनि विस्राव्य च मन्त्रयुक्तम् ॥
आवरणार्थन्तु तच्छत्रं ब्राह्मणाय प्रदीयते ।
पश्चादुपानही दद्यात् पादस्पर्शकरे शुभे ॥
सतप्तवालुकां भूमिमसिकण्टकितान्तथा ।
सन्तारयति स्वर्गाणि प्रेतं दददुपानही ।
तिलोपचारङ्कृत्वा तु विप्रस्य नियतात्मना ॥
नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रन्तु आनयेद्भूमि दर्भे हस्तोऽथभूतले ॥
इहलोकं परित्यज्य गतोसि परमाङ्गतिम् ।
एवमाह्वानित गन्धे धूपदीपान् समर्पयेत् ॥

दिने त्रयोदशे प्राप्ते पाकेन भोजयेद् द्विजान् ।
अयं विधिस्तु प्रोक्तव्यः शूद्राणां मन्त्रवर्जितः ॥
अमन्त्रस्य तु शूद्रस्य विप्राणान्तेन गृह्णते ।
नम्रीभूत्वा तु विधिवत् कृत्वा शान्त्युदकानि च ॥
प्रणम्य शिरसा देवं निरापस्थानमागतः ।
स्तोतव्यानि च मन्त्राणि ममभक्त्याव्यवस्थितैः ।

नमो नमो मेदिनि लोकधात्रि ऊर्वि महीशैल गिरिधारिणिधरणि नम्र। ।
धरणि काश्यपि जगत्प्रतिष्ठे वसुधे नमोस्तु वैष्णवीभूतधात्रि ॥
नमोस्तुते सर्वरसप्रतिष्ठे निशयनारीचि नमो नमोस्तुते ॥"

"दद्यात्तिलोदकन्तस्य नामगोत्रमुदाहृतम् ( हरन् ) ।
सम्वाह्य चरणौतद्वन्नमस्कृत्य द्विजोत्तमम् ॥
पाणिना पाणिमङ्गृह्य मन्त्रेणोत्थापयेद् द्विजम् ।
दद्याच्छय्यासनन्देवि तथैवाञ्जनकङ्कती ॥
अञ्जनङ्कतङ्गृह्य शय्यामाक्रम्य वै द्विजः ।
मुहूर्त्तन्तत्र विश्रम्य निरापस्थानमागतः ॥
बालाङ्गुल समुद्धृत्य ब्राह्मणो हस्त आदधे ।
पात्रे चोदुम्बरे तत्र कृत्वा बहुतिलोदकम् ॥
उपाहरन्ति मन्त्रेण सामवेदा द्विजातयः ।
मन्त्रपूतन्तदा तोयं सर्वपापप्रणाशनम् ॥
सङ्गृह्योऽदुम्बरं पात्रं विप्रेण नियतात्मना ।
मन्त्रेणाभ्युक्ष्य तत्सर्वं स्वगृहे यस्तु तिष्ठति ॥
देवांश्चाग्निमुखान् सर्वास्तर्पयित्वाऽविभागशः ।
भूतानाञ्च बलिन्दद्याद् ब्राह्मणेभ्यश्च भोजनम् ॥
प्रेतभोगेन दत्तेन पूजयित्वा द्विजातयः ।
मृतस्य नाम उद्दिश्य अक्षय्यञ्चोप कल्पयेत् ॥
स्वस्तिवाच्य च विप्राय दद्यात्प्रेतविसर्ज्जनम् ।
प्राशयेत्पञ्चगव्यञ्च मधुपर्क्केण संयुतम् ॥"

एवमिति - भोगेनेत्यन्तं प्रेतोद्देशेन पठित्वा ब्राह्मणं प्रागुक्तविधिना-निमन्त्रोदितयर्थः। विशेषविधिना - रात्रौ श्राद्धदिने च। निमन्त्रणमपाकृतम्। कारयित्वा विप्रस्य हृष्टपुष्टेन। माधवीति भूमिसम्बोधनम्।

उपकल्पितविप्रोपवेशने विनियुञ्जीत। मन्त्रयुक्तमासन उपविश्य जानुन्यर्घन्दत्वासिद्धपृवचनाद्यासनोत्सर्गान्तङ्कृत्वा छत्रन्दद्यात्। तिलोपचारन्तिलविकिरणम्। विपृस्य हस्ते पृेतार्घन्दत्वा—

"इहलोकमित्यादिना"— पृेतं सम्बोध्य गन्धादि दद्यात्। अत्र पूर्वोक्तमन्त्रेण स्त्रीश्राद्धे गतोसीत्यत्र नोहः आत्मनः सम्बोध्यत्वात्। धूपपदम् दीपवाससाद्युपलक्षकम्। पुष्पस्य तु - श्रियादेव्योति, धूपस्य - वनस्पतिरसामिति मन्त्रेणकार्य्यः।

## अथ प्रेतोपभुक्तसमर्पणम

"वस्त्रालङ्कार शय्यादि पितुर्यद्वाहनादिकम्।
गन्धपुष्पैः समभ्यर्च्य श्राद्धभोक्त्रे निवेदयेत्॥"

इति बृहस्पतिवचनात्। पितुरित्युपलक्षणम्।

राजमात्रोः राजनि पृेते दद्यात्पृासङ्गिकमेतेन मातापितृ वृत्ति व्याख्यातेति कल्पतरुलिखितवसिष्ठवचनात्। एवञ्च - भयभिन्नस्य पृेतस्योपभुक्तं धनन्देयं पृासङ्गिकं वाहनाद्यासङ्गजनकम् वृत्तिरूपभुक्तार्पणव्यापारः। त्रयोदश इति क्षत्रियपरम्। मिश्रास्तु सच्छद्रपरमित्याहुस्तदश्रद्धेयम्। शूद्रस्य पाकनिषधात्। न्यायवर्त्तिशूद्रस्य षोडशेऽह्न्यशौचापगमाच्च। मन्त्रेति - सुपठितोक्तेत्यादिः। अमन्त्रस्य पूर्वोक्त मन्त्रपाठानधिकृतस्य विपृाऽ श्राद्धिनः कर्तृपाठ्य मन्त्रेण द्युपठितेनोपलक्षिता गृह्यन्ते। श्राद्धद्रव्याणि स्वीकुर्वन्ति। स्त्रीभिस्तु स्वयमेव मन्त्राः पाठ्याः, पौराणिकत्वात्। अत्र श्रौत्रमन्त्रनिषेधोयम्, न्यायसाम्यात्। स्त्रीसाधारण इति मिश्रव्याख्या पृत्याख्येया, स्वोक्तमन्त्राणामेव व्यक्तिवचनान्यायेनोपस्थितेरित्यास्तामन्तःशून्यकृतवृथालिखननिरासविस्तारः।

शूद्रेण श्रोतव्या वेदमन्त्राः पुराणमन्त्राश्च पाठ्या इत्यपि तेषामभिधानम् गण्ड-स्योपरिविस्फोटकमनुहरति। तत्रौषधमनास्थायोपेक्षितम्।

शुचिर्भूत्वेति गायत्री जपादिकमन्नविकिरणतदनन्तराचमनाद्यक्षतसमर्पणा-न्तमभिहितम्। कृत्वेति - अक्षय्योदकं सज्जीकृत्य आगतः पिण्डदानस्थले। तिलोदकम् - तिलाज्यमधुयुक्तमुदकम्। पूर्वसज्जीकृतम् तदन्नसंस्कारवत्। एतेनापसव्यं नमस्कारकाले सूचितम्। मन्त्रेण - स्वस्त्यस्त्वित्यनेन मन्त्रेण। तथोपेयेद्विसृजेत्। दक्षिणादानान्तकर्मानन्तरमिदम्। दद्यात् - पूर्वदत्तमुपन-येत्। गवां प्राप्तकपिलानां बहुवचनम् श्राद्धभेदाभिप्रायकम्। आदधे - कोदादित्यादिपठनम्। मन्त्रेण - व्याहृतिमन्त्रेण। विप्रेणार्पितं सर्वं श्राद्ध-स्थानवर्त्ति तिष्ठतिकदाचित्। अभिवागशः - एकाञ्जलिना सव्येन तर्पयित्वा भोजनमिति - भूरिभोजनपरम्। भागेन भोग्येन द्विजातयो द्विजान् श्राद्धिनः। अक्षय्यमिति। पूर्वकृत्यमनुदितमावश्यकत्वबोधनार्थं प्रेतविसर्ज्जनम्। प्रेतश्राद्धदक्षिणां स्पर्शयेत्।

शय्यादानादिपञ्चकं मलमासे न कार्य्यम्। छत्रोपानहृदानन्तु कार्य्यमेव। अग्निवर्षणतप्तवालुकाजन्यानिष्टवारकत्वेनावश्यकतयाऽग्निपुराण बोधनात्। आवरणार्थन्तु छत्रमिति वाराहे प्रयोगमध्येऽनिष्टवारणरूपफलकथनात्। अतएव - अशौचे पादद्वयं विधेयम्। शय्यादिदान इवात्राशौचन्तु द्वितीयेऽह्नि, इत्यस्मरणात् प्रयोगान्तर्गतत्वादावश्यकमिदं द्वयमिति तु मिश्राः।
"होतुर्वस्त्रयुगन्दद्या"दिति दक्षिणास्मरणादृत्विग्द्वारावति होमादिकरणीयम्।

छन्दोगैस्तु - परिशिष्टोक्तविधिना स्वयमेवतत्कार्यम्। आचार्याय प्रयच्छेद्वा समीगान्वेति कातीयकार्त्तिक्यादिपरिशिष्टीयस्य बृषाच्छादकवस्त्रत्यक्त-वत्सतरीमध्यैकगोप्रतिपादनस्याचार्याय विहितत्वात्। आचार्यः छन्दोगपरि-शिष्टटीकायां लक्षितः—

"उदाहरति वेदार्थान् यज्ञविद्या स्मृतीरपि।
श्रुतिस्मृतिसमापन्नं तमाचार्य्यंवदुर्बुधाः॥"

पूर्णाहुत्यनन्तरं जूटिकाहोमः। शूलगवे प्रकृतौ तथा बोधनात्। स्फिचोरङ्कणमिति वचनाद्वरोनिकटचरणे त्रिशूलचक्र लिखनङ्कार्यम्। तस्य हस्ते धार्यत्वात्। बृषभस्य हरिहरमूर्त्तित्वात्। हेतुस्तत्र लिखने हेतुरभिहितो मिश्रैः। तच्चाज्ञानविजृम्भिनम्। ततश्चरणो हि वृषो न तु हस्तानपीति त्रिशूलाधारस्फिक्सजातीयवामस्फिक्सम्मुख पार्श्वे, चक्रमिति तु छन्दोगमाध्यन्दिनीयानाम्। ऋग्वेदिनान्तु - स्फिचोरेव त्रिशूलचक्राङ्कनमिति विवेकः। शेषं माध्यन्दिनानां कात्यायनोक्तं तरङ्गिण्याम्। छन्दोगानान्तु परिशिष्टोक्तं मदीयपद्धतौ द्रष्टव्यम्।

पल्लवे— "आसुरन्तद्भवेच्छ्राद्धं दश यत्र न भञ्जते।
असम्पत्तौ सप्त पञ्च त्रयाणामपिभोजनम् ॥"

श्राद्धोत्तरकृत्यमिदं सर्वसाधारणम्। मत्स्यपुराणीय पूर्वलिखित वचनादेकादशाहश्राद्धपूर्वं भोजनीयाः।

"पायसं बहुसर्पिष्कं ब्राह्मणान्तत्र भोजयेत्।"

इति ब्राह्मणत्रयभोजनञ्च बृषोत्सर्गानन्तरङ्करणीयम्।

एवञ्च - पञ्चविंशतिर्विप्रा अवश्यमेकादशाहश्राद्धे बृषोत्सर्गकारिणा भोजनीया इति समुदायार्थः।

आश्वलायनः— "प्रेत श्राद्धेषु सर्वेषु न स्वधानाभिरम्यताम।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम् ॥
प्रेतश्राद्धस्य पिण्डे तु अनुशक्तो न युज्यते।
पितृशब्दं न कुर्वीत पितृहा सोऽपिजायते ॥"

सकृदिति - श्राद्धिब्राह्मणत्रयपक्षेऽप्येकदैवेत्यर्थः। पिण्ड इति अर्घगन्धादिनाऽवनेजन - पिण्डदान - प्रत्यवनेजन-सूत्रदानपरम्। अनुशब्दो - ये चात्रत्वान्वित्यादिमन्त्रः। पितृशब्दमिति - नमो वः पितर इत्यादि मन्त्रपाठमित्यर्थः।

शेषानुप्रश्नश्च न प्रेतश्राद्धे कर्त्तव्यः।

"प्रेतश्राद्धे यदुच्छिष्टं ग्रहे पर्युषितञ्च यत् ।
दम्पत्योर्भक्तशेषञ्च न भुञ्जीत कदाचन ॥"

इतिवचनेन शेषभोजननिषेधात् ।

शातातपः—"प्रेतन्तु नामगोत्राभ्याम् उत्सृजेदुपतिष्ठताम् ।" उद्दिश्येत्यादिः ।

## अथ प्रेतायोदकुम्भदाने

पारस्करः – अहरहन्नमोस्मै ब्राह्मणायोदकुम्भञ्च दद्यात् । पिण्डमध्यमेके निगृह्णन्ति ब्राह्मणायेति प्रतिपत्तिस्थानमुक्तम् । अस्मै प्रेतायेति श्राद्धोद्देश्य-कथनम् । श्राद्धञ्चेदं तत्प्रकरणपाठात् - पिण्डान्वयाच्च । एके शाखान्तरीयाः । अशौचापगमदिनमारभ्य वर्षपर्यन्तमिदं श्राद्धकल्पद्वयेऽपि कर्त्तव्यम् । सपिण्डने कृतेऽपि कार्यम् प्रागुक्तमत्स्यपुराणात् । प्रेतशब्दः परन्तत्र नोल्लेख्यः ।

"मृते पितरि वै पुत्रः पिण्डमब्दं समापयेत् । अन्नं कुम्भञ्च विप्राय प्रेत निर्देशधर्मत" इति हारीतवचनमकृतसपिण्डनपरम् । सपिण्डनोत्तरमसमवे-तार्थत्वात् ।

मात्स्ये— "यावदब्दञ्च यो दद्यादुदकुम्भं विमत्सरः ।
प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ॥"

एतन्मते वर्षव्यापकश्राद्धानामेक एव सङ्कल्पोऽश्वमेधफलस्य । पारस्कर-मते तु - प्रत्यहं सान्नोदकुम्भोपस्थितेः फलस्य मध्ये च क्षताशौचादौ पतितं न कार्यम् । नित्यश्राद्धादिवत् । अशौचे तु व्यतीते इत्यादि वचनस्य मृताह-कर्त्तव्यश्राद्धपरत्वात् । काम्यत्वाच्चेदं श्राद्धं नावश्यकमिति नाचरन्ति मैथिलाः ।

शातातपः—"सपिण्डीकरणं श्राद्धं देवपूर्वं नियोजयेत् ।
पितॄनेवाशयेत्तत्र पुनः प्रेतं न निर्दिशेत् ॥
निरूप्य च ततः पिण्डान् पिण्डदः पितृनामतः ।
ये समाना इति द्वाभ्यामाद्यन्तं विभजेत्त्रिधा ॥

एष एव विधिः कृत्सोऽर्घपात्रचतुष्टये ।
आसिञ्चेत्पितृपात्राणि प्रेतपात्रेण मन्त्रवित् ।।"

प्रकृतिविकृतिन्यायप्राप्तस्य देवपूर्वत्वस्यविधानं काण्डानुसमयबोधनार्थम् ।

**वैजवापः**—प्रागेव दैवेऽर्घमन्नाद्यञ्चदत्वा गन्धमाल्यैः पात्रमर्च्चयित्वाहुतशेषं पितृभ्यः पात्रेषु दद्यात् । पात्रं पितामहादि श्राद्धि च विप्रं पितृभ्य इति विशेषोपदेशाद्विश्वेदेवप्रेतश्राद्धयोन्न हुतशेषदानम् । अतएव विश्वेदेवश्राद्धपूर्वं न होमः । पृथक्पात्रे च प्रेतान्नसाधनम् । व्यञ्जनस्य च होमेऽनिवेशादेकपात्रे पाकः । एवञ्च - पितामहादित्रय पात्रे हुतशेषन्दत्वा प्रेतपूर्वकं परिवेषणमिति सिद्धम् । विभजेत् - खण्डीकुर्यात् । विभागभेदान्मन्त्रयोर्द्विरावृत्तिः ।

केचित्तु—प्रेतपात्रं पितृपात्रेष्वासिञ्चति - ये समाना इति द्वाभ्यामेवं पिण्डानामिति वैजवापसम्वादात्संयोजनमेव विभागपदार्थः । अतएव - विभक्तरागामकालसन्ध्यामिव धातुमत्तामिति कलिदासवाणीत्याहुः ।

तदसत्—"विभजन्तेन ये भूपा नालभन्ते न ते श्रियम् इति रूढ़िव्युत्कोदाहरणकथनेन सम्बन्धस्य विभागपदाशक्यत्वात् । किञ्चैष एव विधिरित्यर्घविभागमभिधायासिञ्चेदिति पुनरुक्तमापद्येत । अतएव - मन्त्रवदिति हेतुगर्भविशेषणं मेलने मन्त्रकरणकत्वबोधनार्थमितिदिक् । मन्त्रौ च माध्यन्दिनीयाविति तद्रीत्या पाठ्यौ ।

**ब्राह्मे**— "चतुर्भ्यश्चार्घपात्रेभ्य एकं वामेन पाणिना ।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ।।
संसृजतु त्वा पृथिवी ये समाना इति स्मरन् ।
प्रेतविप्रस्य हस्ते च चतुर्भाग जलं क्षिपेत् ।।"

संसृजत्वित्यादिमन्त्रः शाखान्तरपरः । चतुर्थभागम् - चतुर्थमंशम् ।

"दत्वापिण्डमथाष्टाङ्ग ध्यात्वा तञ्च शुभासुरम् ।
सुवर्णरूप्यदर्भैश्च तस्मिन्पिण्डन्ततस्त्रिधा ।।

कृत्वाऽपि महादिभ्यः पितृभ्यः प्रेतमर्च्चयेत् ।
अर्घैः पुष्पैस्तथा धपैर्दीपैर्माल्यानुलेपनैः ॥
मुख्यन्तु पितरङ्कृत्वा पुनस्तु नान्यथाक्रमम् ॥"

अष्टाङ्गम् – घृत, मधु, गन्ध, पुष्प, धूप, दीप, पिण्डशेष, सूत्रयुतम् । तं पिण्डन्तस्मिन् छिन्नमूलकुश त्रिधाकृत्वा - पितृभ्यस्त्रिकपिण्डेभ्यस्तन्मेलनार्थमिति यावत् ।

अर्च्चयेत्—मिलितपिण्डे मुख्यमुपरिस्थं पितरं तत्पिण्डभागम् अन्यान् त्रिकपिण्डभागान् । अर्घश्च तिलगन्धपुष्पजलैः श्राद्धे तथा दर्शनात् । अष्टाङ्गस्तु - देवानां विभागात्प्राक् त्रिकपिण्डपूजनन्तु चिन्त्यम् । चकारस्यानुक्तसमुच्चयार्थत्वे मानाभावात् ।

"मृते पितरि यस्यार्थः विद्यते च पितामहः ।
तेन देयास्तु यैः पिण्डाः प्रपितामहपूर्वकाः ॥"

जीवन्तमपहाय परेण त्रिकं पूरणीयमिति तात्पर्यम् ।

परिशिष्टे-- "असंस्कृतौ न संस्कार्य्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरन्तत्र संस्कुर्यादिति कात्यायनोब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥"

सपिण्डनकालात्ययेऽकृतसपिण्डनेन पितामहादिना प्रेतस्य सपिण्डनङ्कर्त्तव्यम् । न तु कालात्ययेपितामहादेरपि । कालसत्वे तु तस्य सपिण्डनङ्कृत्वा पितुः सपिण्डनङ्कार्यम् । एवं श्वश्रादावसपिण्डतायामपि रीतिः । संस्कुर्यात्-सपिण्डयेत् । पापिष्ठम् - प्रेतभावापन्नम् ।

"यैरिष्टविधिभिर्यज्ञैः पूजितोयैश्च केशवः ।
प्रेतलोकं न ते यान्ति तथा ये सामवेदगाः ॥"

इति विष्णुधर्मोत्तरोक्तमपि प्रेतभावानापन्नं पार्वणाद्यनर्हत्वरूपप्रेतत्व-

विमुक्तयो सपिण्डयेत्। शुद्धेन सपिण्डितेन पापकृता तद्भिन्नेन पितामहेन पितरम्, प्रपितामहेन पितामहं वा, श्वश्र्वा स्नुषां प्रश्वश्र्वा वा स्नुषास्नुषाम्। कुर्यादिति विनिश्चय इति पठित्वा शुद्धं सपिण्डनङ्कुर्यादिति नारायणेन व्याख्यातम्।

स्मृतिः— "पितामहे म्रियमाणे पितुः प्रेतस्य निर्वपेत्।
पितुस्तस्य च वृत्तस्य जीवेच्चेत्प्रपितामहः॥"

तस्य - पितामहस्य पिता यो मृतस्तस्य प्रपितामहस्य त्रिकपूरकस्य निर्वपेत्। स चेज्जीवेत् तदा तत्पितुः। पितामहमरणे च प्रेतपितुर्निर्वपेत्।

यत्तु - एक एव त्रिकस्था इति नारायणस्तदयुक्तम्। कुर्यात्पात्रचतुष्टयमित्यस्य पिण्डादिविभागस्य च बाधप्रसङ्गात्। कृत्रिमपुत्रादिकृतसपिण्डनेप्येषारीतिः।

हारीतः—"पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः॥
एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः।
तस्मिन् सति सुताः कुर्युः पितामह्या सहैव तु॥
तस्याञ्चैव तु जीवन्त्यान्तस्याः श्वश्र्वेति निश्चयः।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः॥"

इति वचनात्सपत्नीपुत्रः पुत्रवदेव सपिण्डनङ्कुर्यात्।

पैठीनसिः— "अपुत्रायां मृतायान्तु पतिः कुर्यात्सपिण्डताम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥"

कात्यायनः— "मातुः सपिण्डीकरणं पितामह्यां सहोदितम्।" पुत्रिकामातरमधिकृत्याह—

उशनाः – "पितुः पितामहेन यद्वत्पूर्णे सम्वत्सरे सुतैः।
मातुर्मातामहेन तद्वदेषा कार्या सपिण्डता॥"

मातामहेन जीवति मातामह्यादित्रयेण तस्मिन्मृते मातामहादित्रयेण सपिण्डनं पुत्रिकापुत्रणेकार्यम्। तत्पतिरपि पुत्रहीनः श्वशुरादिना श्वश्र्वादिना वा भार्यां सपिण्डयेत्।

वृहस्पतिः— "स्वेन भर्त्रा सह श्राद्धं माताभुङ्क्ते स्वधामयम्।
पितामही च तेनैव तेनैव प्रपितामही ॥
भर्तृगोत्रेण दातव्यं स्त्रीणां पिण्डोदकं सुतैः ॥"

तेन - स्वभर्त्रा। एतेन - पति पुत्र सपत्नीपुत्रहीनयोरपि पितामही प्रपितामह्योः सपिण्डनं विहितम्। ब्राह्मदैवार्ष प्राजापत्यविधिनोढायाश्छन्दोग-स्त्रियाः श्राद्धं पतिगोत्रेण। तादृश्या वाजसनेयिस्त्रियाश्चतुर्थ्यनन्तरमृतायाश्चैवम्। "पाणिग्रहणिका मन्त्राः पितृगोत्रापहारका" इति वचनात्। पूर्व-लिखितबृहस्पतिवचनाच्च। अतएव प्राप्तेनगोत्रेण पाणिग्राहमभिवादये-दित्युत्तरविवाहपद्धतिः।

गान्धर्वादिविध्यूढायाः सप्तपदीकृताया ब्राह्मादिविध्यूढवाजसनेयि-भार्यायाश्चतुर्थीपूर्वमरणे परेण हरणे वा सपिण्डीकरणपर्यन्ता पितृगोत्रेणाप्रसूतायाः क्रियाः। प्रसूतायास्तु - प्रथमभर्तृगोत्रेण सपिण्डनोत्तरक्रिया च द्वितीय पतिगोत्रेण कार्या।

"पदे तु सप्तमे या च बलात्काचिद्धृता भवेत्।
पैतृकं त्वप्रसूतायां ततः पौर्विकभर्तृकम् ॥"

इति हारीतेन,

एकमूर्त्तित्वमायाति सपिण्डीकरणे कृते।
पत्नी पतिपितॄणान्तु तस्मात्तदगोत्रगामिनी ॥
चतुर्थीहोममन्त्रेण त्वङ्मांसरुधिरेन्द्रियैः।
भर्त्रा संयुज्यते नारी तद्गोत्रा तेन सा भवेत् ॥

इति च वृहस्पतिनाऽभिधानात्।

"सपिण्डीकरणं यावत्प्रेतश्राद्धानि षोडश।
पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ॥"

हारीतः— "सर्वेषान्तु मतङ्कृत्वा ज्येष्ठेनैकेन यत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतम्भवेत् ।"

अनुमतिदानद्रव्ययोः करणे कनिष्ठो नाकरणेदोषभागित्यर्थः । पितुः पुत्रेण कर्त्तव्य इति सामान्यतोऽधिकारात् । दोषमाह—

शङ्खः— "अकृत्वा प्रेतकार्याणि प्रेतस्य धनहारकः ।
वर्णिनां यद्वधेप्रोक्तं तद्व्रतं नियतञ्चरेत् ॥"

वर्णी—ब्रह्मचारी । अनुपनीतेन त्रैवर्णिकेन वेदमन्त्राः पाठ्या एव । "नैनं व्याहारयेद्ब्राह्मस्वधानिनयनादृत" इति वचनात् । तेन स्त्री शूद्राभ्याञ्चाग्नौ करणहोमः कार्यः । प्रधानाधिकारित्वात् ।

"यतेः किञ्चिन्न कर्त्तव्यं न चान्येषाङ्करोति सः ।"

भारते— "न दग्धव्यो न दग्धव्यो विदुरोऽयं कथञ्चन ।
ज्ञानाग्निदग्धदेहस्य पुनर्दाहो न विद्यते ॥"

उशनाः—"एकोद्दिष्टन्न कर्त्तव्यं न्यासिनाञ्चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ॥"

कौर्मे— "नैष्ठिकानां वनस्थानां यतीनां नियतात्मनाम् ।
नाशौचङ्कीर्त्यते सद्भिः पतिते च तथामृते ॥"

शातातपः— "एकोद्दिष्टंयतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात्सर्वश्राद्धन्तु सर्वदा ॥"

दत्तात्रेयः— "एकोद्दिष्टजलम्पिण्डमशौचं प्रेतसत्क्रियाम् ।
न कुर्याद्वार्षिकादन्यद्ब्रह्मीभूताय भिक्षवे ॥"

एवञ्च - त्रिदण्डयतिने न दाहपिण्ड प्रेतश्राद्धानि । किन्त्वेकादशाहेऽब्दपूर्त्यंमावास्यवृद्ध्यादिषु पार्वणङ्कार्यम् । एकदण्डिनस्तु किमपि श्राद्धपिण्डदानादि न । अशौचाभावस्तूभयत्र ।

ज्येष्ठपुत्रस्य क्षताशौचासामर्थ्यम् वैदेश्येषु कनिष्ठस्य श्राद्धद्रव्यादातृत्वे च कनिष्ठोऽपि प्रेतश्राद्धानि यतिपार्वणञ्च एकादशाहवर्षपूर्त्योः पार्वणानन्तरञ्च विभागपक्षे कुर्यादिति संक्षेपः। सपिण्डनं यतिकश्राद्धम्वार्षिकञ्च कृत्वोभयशेषो भक्ष्यः। इष्टेभ्यो दीयतामिति विप्रवचनेन तु भक्षणविरहेप्यक्षतिः।

शातातपः— "चान्द्रायणं नवश्राद्धे पराको मासिके मतः।
मासत्रये त्रिरात्रिः स्यात् षण्मासे कृच्छ्र एव हि॥
आब्दिके कृच्छ्रपादः स्यात् एकाहः पुनराब्दिके।"

हारीतः—"भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सहपिण्डक्रियाङ्कृत्वा कुर्यादभ्युदयन्ततः॥
तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते॥"

तथाऽऽभ्युदयिकाङ्गकं सपिण्डनानधिकारी कनिष्ठस्तु पितामहादित आभ्युदयिकंकुर्यादेव। स्त्रिया तु - रजोयोगे शुद्ध्यनन्तरं प्रेतश्राद्धं वार्षिकञ्च कार्यमितिदिक।

## अथोत्तरक्रियाऽभिधीयते

मात्स्ये—"ततः प्रभृतिसङ्क्रान्तावुपरागादिपर्वसु।
त्रिपिण्डमाहरेच्छ्राद्धमेकोद्दिष्टं मृताहनि॥
एकोद्दिष्टम्परित्यज्य पार्वणं यः समाचरेत्।
सदैव पितृहा स स्यान्मातृहा भ्रातृनाशकः॥
मृताहे पार्वणङ्कुर्वन्नाधोधो याति मानवः।
सम्पृक्तेष्वाकुलीभावः प्रेतेषु च ततोभवेत्॥
यत्र यत्र प्रदातव्य सपिण्डीकरणात्परम्।
पार्वणेन विधानेन देयमग्निमता सदा॥

शङ्खः—"सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते।
तत्र तत्र त्रयङ्कुर्याद्वर्ज्जयित्वा मृताऽहनि॥
अमावास्या क्षयो यस्य प्रेतपक्षेऽथ वा पुनः।
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणोविधिः॥"

**जावालः**— "औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टंसुतादश ॥"

**हारीतः**— "सपिण्डीकरणे वृत्तो पृथक्त्वं नोपपद्यते
पृथक्त्वे तु कृते पश्चात्पुनःकार्या सपिण्डता ॥
असपिण्डीकृतप्रेतमेकोद्दिष्टे न तर्पयेत् ।
सपिण्डीकरणादूर्ध्वं त्रिभिः सामान्यमिष्यते ॥"

ततः सपिण्डनादेकोद्दिष्टमिति । एकदिने द्वयोः प्राप्तौ पार्वणात्प्रागेकोद्दिष्टङ्कालालाभे सतिकर्त्तव्यम् । यदि तु त्रयोदशी पार्वणानन्तरङ्कुतुपे चतुर्दशी लभ्यते यदि वा प्रातः तीर्थप्राप्त्यनन्तरं क्षयतिथिर्लभ्यते तदा- पार्वणोत्तर मप्येकोद्दिष्म् । शत्रुघ्नोपाध्यायास्तु---

सिनीवाली प्रेतपक्षे मातापित्रोर्मृतं यदि ।
एकोद्दिष्टन्तु मातुः स्यात् पितुःपार्वणमुच्यते ॥
प्रेतश्राद्धे प्रमीतस्य पितुः कुर्वीत पार्वणम् ।
पितृव्यभातृ मातृणां एकोदिष्टन्न पार्वणम् ॥

**देवलः**--- ये चात्र विश्वदेवार्थं विप्राः पूर्वं निमन्त्रिताः ।
प्राङ्मुखान्यासनान्येषां द्विदर्भोपनिहितानि च ॥
दक्षिणामुखयुक्तानि पितृणामासनानि च ।
दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥"

आसनानि वृद्ध्यादीनि । पितृणामितिषष्ठी परम्परासम्बन्धे पितृब्राह्मणानामिति फलति ।

**मनुः**--- "दैवाद्यन्तं तदीहेत पित्राद्यन्तन्न तद्भवेत् ।
पित्राद्यन्तन्त्वीहमानः क्षिप्रं नश्यति सान्वयः ॥"

आमन्त्रणादि देवपूर्वकम् । विसर्ज्जनञ्च देवतान्तमित्यर्थः ॥

इति श्रीमन्महामहोपाध्याय वामदेवनिर्मिता
गूढाथदीपिका समाप्ता ॥

# कामेश्वरसिंह-दरभंगा-संस्कृत-विश्वविद्यालय
## कामेश्वरनगर, दरभंगा

विक्रेतव्य पुस्तकें

| क्र० सं० पुस्तक नाम | लेखक एवं सम्पादक | मूल्य |
|---|---|---|
| १ विद्यापति-संस्कृत-ग्रन्थावली--- | | |
| (१) प्रथमभाग (हिन्दीअनुवादसहित) (विभागसार एवं शैवसर्वस्वसार) | स० (१) डॉ० जयमन्त मिश्र<br>(२) डॉ० इन्द्रकान्त झा | ७५।- |
| (२) द्वितीय भाग (हि.अ.स.) (शैवसर्वस्वसार-प्रमाणभूत-पुराणसंग्रह एवं दानवाक्यावली) | स० (१) डॉ० जयमन्त मिश्र<br>(२) प० श्री आनन्द झा | ७५।- |
| २ म० म० गोकुलनाथ-ग्रन्थावली--- | | |
| (१) रसमहार्णवः | स० (१) प० श्री धर्मनाथ झा<br>(२) प० श्री कुमुदनाथ मिश्र | ६।- |
| (२) आलोकमंगलविचारः | स० ,, ,, ,, | २०।- |
| (३) मासमीमांसा | (१) प० श्री धर्मनाथ झा | ६।- |
| (४) अनुमितिदीधितिविद्योतः | स० (१) ,, ,, ,,<br>(२) प० श्री रामसेवक झा | ७।- |
| (५) गोकुलनाथग्रन्थगुच्छः (दिक्कालनिरूपणम् रूढिव्याख्यारहस्यम् मिथ्यात्वनिरूपणञ्च) | स० ,, ,, ,, | ७।- |
| (६) कुण्डकादम्बरी | स० (१) प० श्री धर्मनाथ झा<br>(२) प० श्रीकुमुदनाथ मिश्र<br>संशोधक-विद्यावारिधि प० श्री रामचन्द्र झा | २०।- |
| (७) तत्त्वचिन्तामणौ उपमान-रश्मिचक्रम् म० म० गोकुलनाथः) | स० (१) प० श्री रामसेवक झा<br>(२) प० श्री रामचन्द्र झा | |

३ म० म० वाचस्पतिग्रन्थावली---

| | | |
|---|---|---|
| (१) कृत्यप्रदीपः | स० (१) डॉ० जयमन्त मिश्र<br>(२) प० श्री धर्मनाथ झा<br>संशोधक प० श्री कृष्णानन्द झा | २४।॰ |
| (२) श्राद्धचिन्तामणिः— | स० (१) डॉ० जयमन्त मिश्र<br>(२) प० श्रीधर्मनाथ झा<br>(३) प० श्रीरामचन्द्र झा | ३०।॰ |
| (३) आचारचिन्तामणिः— | स० (१) डॉ० जयमन्त मिश्र<br>(२) प० श्रीधर्मनाथ झा<br>(३) प० श्रीकृष्णानन्द झा<br>(४) प० श्रीशशिनाथ झा | ३५।- |
| (४) पितृभक्तितरङ्गिणी<br>(प्रायश्चित्तव्यवस्थासारसमुच्चयसहिता) | (१) प० श्रीरामसेवक झा प्रभृति<br>(२) प०श्रीप्रभुनायायणशर्मा प्रभृति | २५।॰ |
| (५) कृत्यमहार्णवः | (१) ० श्रीरामसेवकझा प्रभृति | ३०।- |
| ( ) व्यवहारचिन्तामणिः | प० प्रभुनारायणशर्मा प्रभृति | १७।- |

४ सुलभसंस्कृतग्रन्थमाला---

| | | |
|---|---|---|
| (१) मेघदूतम् (गुटका मूल) | प० श्री रामचन्द्र मिश्र | ०.५० |
| (२) हरविजयम् (प्रथमसर्गः) | ,, ,, ,, | १।- |
| (३) रघुवंशम् (मूलमात्र सम्पूर्ण) | ,, ,, ,, | ४।॰ |
| (४) समासशक्तिदीपिका — | ले० महावैयाकरण दीनबन्धु झा | ५।॰ |
| (५) उपसृष्टधात्वर्थसंग्रहः | ले० ,, ,, ,,<br>डॉ० शशिनाथ झा | ६।- |
| (६) मेघदूतम्<br>(जगद्धरीयरसदीपिनी-व्याख्योपेतम्) | स० डॉ० हृषीकेश झा | १२।॰ |
| (७) कुमारभार्गवीयम् भानुदत्तकृतम् | स० प० श्रीरामचन्द्र मिश्र | २५।- |
| (८) ध्वनिकल्लोलिनी-<br>(हिन्दी अनुवादसहित) | ले० अनु० प० श्रीआनन्द झा | २५।॰ |
| (९) विज्ञानं समाजश्च | ले० डॉ० सरयू प्रसाद गुप्त<br>सं० वि० वा० रामचन्द्र मिश्र | २५।- |
| (१०) सुभाषितावली<br>(हिन्दी अनुवादसहित) | ले० विद्यावाचस्पति प० श्रीउपेन्द्र झा | २०।- |

(११) मिथिलामाहात्म्यम्- सं० प० श्रीधर्मनाथ झा ५।=

(१२) अभिनन्दनमाला- सं० प० श्रीरामचन्द्र मिश्र ६।=

(१३) छोन्दोगानां विवाहपद्धतिः सं० प० श्रीतेजनाथ झा ५।-

(१४) मिथिला का इतिहास ले० डॉ रामप्रकाश शर्मा ७५।-

(१५) स्मृति साहस्री ले० 'रमाकर' १५।-

(१६) लौकिकन्यायरत्नाकरः सं० प० श्रीरामचन्द्र मिश्र ४५।-

(१७) तिथिनिर्णयः ले० म० म० राजनाथ मिश्र २४।-सजिल्द

(सपरिशिष्टः) सं० वि० वा० रामचन्द्र झा २०।-अजिल्द

(१८) ग्रहणमाला - ले० म० म० हेमाङ्गद ठाकुर २०।=
सं० प० श्री व्रजकिशोर झा

(१९) नियमावली एवं पाठ्यग्रन्थावली-प्रकाशक सं० वि० वि० (दरभङ्गा) ७।=
(१९८३ से प्रवृत्त)

५ महाराजाधिराजकामेश्वरसिंह-ग्रन्थमाला--

(१) परमलघुमञ्जूषा सं० (१) वि० वा० श्रीरामचन्द्रमिश्र १५।-
(म० म० शशिनाथ झा कृत- (२) डॉ० शशिनाथ झा
सरलाख्यव्याख्योपेता)

(२) भारतीयसर्वस्वम् ले० प० श्री भोलानाथ मिश्र ४५।-
(हिन्दीव्याख्योपेतम्)

(३) प्रयोगपल्लवः (भवनाथकृतः) डॉ० शशिनाथ झा ३७।-

(४) तर्कसंग्रहः प० श्री आनन्द झा ४५।-
(न्यायबोधिनी सीता-पद्माव्याख्यासहितः)

(५) शकुन्तलाविवृति ले० प० श्री आँखी झा १५।-
सं० प० श्री कृपाकान्त ठाकुर

(६) उपवनविनोदः प० श्री कृष्णानन्द झा १२।-
(हिन्दीटीकासहित)

(७) वातावरणनाटकम् - मूल० पं० श्रीगोविन्द झा
अनु० डॉ० शशिनाथ झा १२।-

(८) हृत्परिवर्त्तननाटकम् - प० श्रीआनन्द झा ७।-

(९) म० म० माधवीयाद्भुतदर्पणः प० श्री रामचन्द्र झा ४५।-

(१०) शुद्धिदीपिका म० म० कोलेश्वरकृता २५।-

(११) छन्दोगाह्निकोद्धारः म० म० शङ्करमिश्रकृतः १७।-
(श्रीदत्तकृतच्छन्दोगाह्निकं रघुनाथकृतव्याख्योपेतम्)
स० डॉ० प्रभुनारायण शर्मा
डॉ० लक्ष्मीनाथ झा प्रभृति १७।-

(१२) स्मृतितत्त्वसमुच्चयः म० म०सचलमिश्रकृतः ८।-

[१३] स्मृतिदीपिका म० म० उमापतिकृता डॉ० शशिनाथझाकृत-
शुद्धिकौमुदी सहिता १६।-

यन्त्रस्थ

(१०) न्यायवैशेषिक वार्त्तिकम् सं० प० श्री अनन्तलाल ठाकुर

(२) उणादिरत्नकौमुदी प० श्री अर्जुन झा

(३) न्यायमञ्जरी (हिन्दी टीकोपेता) प० श्री आनन्द झा

(४) लघुशब्देन्दुशेखरः ,, ,, प० श्री ताराकान्त झा

(५) हस्तलेख सूची-

(६) प्रत्यभिज्ञाप्रदीपः प० श्री रङ्गेश्वर नाथ मिश्र

(७) रसिकमनोरञ्जिनी महावै० दीनबन्धु झा

(८) तत्त्वचिन्तामणिः स० प० श्री आनन्द झा
(आलोक दीपिकाकण्टकोद्धार इत्यादि व्याख्यासहित)

(९) द्वैतनिर्णयः (वाचस्पतिमिश्रः) डॉ जयमन्त मिश्र

[१०] शुद्धिचिन्तामणिः ,, ,, ,,

[११] गूढार्थदीपिका म० म० वामदेवकृता

विशेषः--प्रकाशन की कीमत कुलसचिव कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालय, कामेश्वरनगर, दरभंगा के पदनाम से (भारतीय स्टेट बैंक K.S.D शाखा दरभंगा) बैंक ड्राफ्ट द्वारा पहले ही प्रेषणीय है। आदेश के उपरान्त प्रोफोर्मा देयक भेजा जायगा। अथवा प्रकाशनमूल्य की राशि अग्रिम भेज कर निकटस्थ बैंक के माध्यम से भी मंगवाया जा सकता है।

विशेष.—त्रैमासिक शोधपत्रिका "विश्वमनीषा" १५/रु०वार्षिक [विगत ७ से संचालित] मूल्य भेजने पर प्राप्य है।

प्राप्तिस्थान —
प्रकाशन विभाग
कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालय, दरभङ्गा

